॥ श्रीरस्तु ॥

# ॥ स्तोत्ररत्नावली ॥



[ विष्णुसहस्रनामस्तोत्रम्, श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्, नारायणाष्टकम्,मुकुन्दमाला, चतुःश्लोकी, स्तोत्ररत्नम्, देवराजाष्टकम्, शरणागतिगद्यम्, श्रीरङ्गगद्यम्, श्रीवैकुण्ठगद्यम्, श्रीवैकुण्ठस्तवः, अतिमानुषस्तवः,सुन्दरबाहुस्तवः,वरदराजस्तवः, श्रीस्तवः,श्रीरङ्गराजस्तवः, श्रीगुणरत्नकोशः, श्रीसुदर्शनशतकम् । ]

—:०:—

श्री काञ्ची प्रतिवादिभयङ्करमठस्य
धर्मप्रचारविभागेन
प्रकाशिता
SRI SUDARSANA PRESS,
CONJEEVERAM.



॥ काञ्ची ॥

१९३५.

—

॥ श्रीः ॥

॥ श्रीपरमात्मने नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

# ॥ स्तोत्ररत्नावळी ॥



## ॥ विष्णुसहस्रनामस्तोत्रम् ॥



शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् । विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥ व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् । पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे । नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ अविकाराय शुद्धाय नित्याय परमात्मने । सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् । विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ ओं नमो विष्णवे प्रभविष्णवे ॥

श्रीवैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत ॥

युधिष्ठिर उवाच—

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् । स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥ २ ॥ को धर्मस्सर्वधर्माणां भवतः परमो मतः । किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥

श्रीभीष्म उवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् । स्तुवन्नामसहस्रेण पुरुषस्सततोत्थितः ॥ ४ ॥ तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् । ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥ अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् । लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥ ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ॥ लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥ एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥ ८ ॥ परमं यो महत्तेजः परमं यो महत्तपः । परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥ पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥ यतस्सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ तस्य लोकप्रधानस्य जगन्नाथस्य भूपते । विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥ यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥ ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः । छन्दोऽनुष्टुप्तथा देवो भगवान्देवकीसुतः ॥ १४ ॥ अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः । त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥ विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् । अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥ १६ ॥

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य श्रीवेदव्यासो भगवानृषिः । अनुष्टुप्छन्दः । श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता । अमृतांशूद्भवो भानुरिति बीजम् । देवकीनन्दनस्स्रष्टेति शक्तिः । उद्भवः क्षोभणो देव इति परमो मन्त्रः । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् ।

रथाङ्गपाणिरक्षोभ्य इति नेत्रम् । त्रिसामा सामगस्सामेति कवचम् । आनन्दं परब्रह्मेति योनिः । ऋतुस्सुदर्शनः काल इति दिग्बन्धः । श्रीविश्वरूप इति ध्यानम् ॥ श्रीमहाविष्णुकैङ्कर्यरूपे सहस्रनामजपे विनियोगः ।

ध्यानम् ॥ क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते मौक्तिकानां मालाक्लृप्तासनस्थस्स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः । शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षैरानन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥ भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशाशिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः । अन्तस्स्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् । पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥

[सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् । सहारवक्षस्स्थलशोभिकौस्तुभं नमामि विष्णुं शिरसा चतुर्भुजम् ॥ छायायां पारिजातस्य हेमसिंहासनोपरि । आसीनमम्बुजश्याममायताक्षमलङ्कृतम् । चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कितवक्षसम् । रुक्मिणीसत्यभामाभ्यां सहितं कृष्णमाश्रये ॥]

ओम् ॥ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः । भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥ पूतात्मा परमात्मा च मुक्तानां परमागतिः । अव्ययः पुरुषस्साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥ योगो योगविदां नेता प्रधानपुरुषे-

श्वरः। नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥ सर्वश्शर्वश्शिवस्स्थाणुर्भूतादिर्निधिरव्ययः। सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥ स्वयम्भूश्शम्भुरादित्यः पुष्कराक्षो महास्वनः। अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥ अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः। विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥ अग्राह्यश्शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः। प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥ ईशानः प्राणदः प्राणो ज्येष्ठश्श्रेष्ठः प्रजापतिः। हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥ ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः। अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥ सुरेशश्शरणं शर्म विश्वरेताः प्रजाभवः। अहस्संवत्सरो व्यालः प्रत्ययस्सर्वदर्शनः ॥ १० ॥ अजस्सर्वेश्वरस्सिद्धस्सिद्धिस्सर्वादिरच्युतः। वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ ११ ॥ वसुर्वसुमनास्सत्यस्समात्मा संमितस्समः। अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥ रुद्रो बहुशिरा बभ्रुर्विश्वयोनिश्शुचिश्रवाः। अमृतश्शाश्वतस्स्थाणुर्वरारोहो महातपाः ॥ १३ ॥ सर्वगस्सर्वविद्भानुर्विष्वक्सेनो जनार्दनः। वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ १४ ॥ लोकाध्यक्षस्सुराध्यक्षो धर्माध्यक्षः कृताकृतः। चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥ भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः। अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥ उपेन्द्रो वामनः प्रांशुरमोघश्शुचिरूर्जितः। अतीन्द्रस्सङ्ग्रहस्सर्गो धृतात्मा नियमो यमः ॥ १७ ॥ वेद्यो वैद्यस्सदायोगी वीरहा माधवो मधुः। अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥ महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः। अनिर्देश्यवपुश्श्रीमानमेयात्मा महाद्रिधृत् ॥ १९ ॥ महेष्वासो महीभर्ता श्रीनिवासस्सतां गतिः। अनिरुद्धस्सुरानन्दो

गोविन्दो गोविदां पतिः ॥ २० ॥ मरीचिर्दमनो हंसस्सुपर्णो भुजगोत्तमः । हिरण्यनाभस्सुतपाः पद्मनाभः प्रजापतिः ॥ २१ ॥ अमृत्युस्सर्वदृक्सिंहस्सन्धाता सन्धिमान् स्थिरः । अजो दुर्मर्षणश्शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥ गुरुर्गुरुतमो धाम सत्यस्सत्यपराक्रमः । निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥ अग्रणीर्ग्रामणीश्श्रीमान् न्यायो नेता समीरणः । सहस्रमूर्धा विश्वात्मा सहस्राक्षस्सहस्रपात् ॥ २४ ॥ आवर्तनो निवृत्तात्मा संवृतस्संप्रमर्दनः । अहस्संवर्तको वह्निरनिलो धरणीधरः ॥ २५ ॥ सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः । सत्कर्ता सत्कृतिस्साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥ असङ्ख्येयोऽप्रमेयात्मा विशिष्टश्शिष्टकृच्छुचिः । सिद्धार्थस्सिद्धसङ्कल्पस्सिद्धिदस्सिद्धिसाधनः ॥ वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः । वर्धनो वर्धमानश्च विविक्तश्श्रुतिसागरः ॥ २८ ॥ सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः । नैकरूपो बृहद्रूपश्शिपिविष्टः प्रकाशनः ॥ २९ ॥ ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः । ऋद्धस्स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥ अमृतांशूद्भवो भानुश्शशबिन्दुस्सुरेश्वरः । औषधं जगतस्सेतुस्सत्यधर्मपराक्रमः ॥ ३१ ॥ भूतभव्यभवन्नाथः पवनः पावनोऽनलः । कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥ युगादिकृद्युगावर्तो नैकमायो महाशनः । अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥ इष्टो विशिष्टश्शिष्टेष्टश्शिखण्डी नहुषो वृषः । क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥ अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः । अपान्निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥ स्कन्दस्स्कन्दधरो धुर्यो वरदो वायुवाहनः । वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥ अशोकस्तारणस्तारश्शूरश्शौरिर्जनेश्वरः । अनुकूलश्शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥ पद्मनाभोऽरविन्दा-

क्षः पद्मगर्भश्शरीरभृत् । महर्द्धिऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८ ॥ अतुलश्शरभो भीमस्समयज्ञो हविर्हरिः । सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९ ॥ विक्षरो रोहितो मार्गो हेतुर्दामोदरस्सहः । महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥ उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः । करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥ व्यवसायो व्यवस्थानस्संस्थानस्स्थानदो ध्रुवः । परर्द्धिः परमस्पष्टस्तुष्टः पुष्टश्शुभेक्षणः ॥४२॥ रामो विरामो विरतो मार्गो नेयो नयोऽनयः । वीरश्शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३ ॥ वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणमः पृथुः । हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥ ऋतुस्सुदर्शनः कालः परमेष्ठी परिग्रहः । उग्रस्संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥ विस्तारस्स्थावरस्स्थाणुः प्रमाणं बीजमव्ययम् । अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४७ ॥ अनिर्विण्णस्स्थविष्ठोभूर्धर्मयूपो महामखः । नक्षत्रनेमिर्नक्षत्री क्षमः क्षामस्समीहनः ॥ यज्ञ इज्यो महेज्यश्च क्रतुस्सत्रं सतांगतिः । सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥४८॥ सुव्रतस्सुमुखस्सूक्ष्मस्सुघोषस्सुखदस्सुहृत् । मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥ स्वापनस्स्ववशो व्यापी नैकात्मा नैककर्मकृत् । वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥ धर्मगुब्धर्मकृद्धर्मी सदक्षरमसत्क्षरम् । अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥ गभस्तिनेमिस्सत्वस्थस्सिंहो भूतमहेश्वरः । आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ५२ ॥ उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः । शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ५३ ॥ सोमपोऽमृतपस्सोमः पुरुजित्पुरुसत्तमः । विनयो जयस्सत्यसन्धो दाशार्हस्सात्वतांपतिः ॥ ५३ ॥ जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।

अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५४ ॥ अजो महा-
र्हस्स्वाभाव्यो जितामित्रः प्रमोदनः । आनन्दो नन्दनो नन्दस्सत्य-
धर्मा त्रिविक्रमः ॥ ५६ ॥ महर्षिः कपिलाचार्यः कृतज्ञो मेदिनी-
पतिः । त्रिपदस्त्रिदशाध्यक्षः महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥ महा-
वराहो गोविन्दस्सुषेणः कनकाङ्गदी । गुह्यो गभीरो गहनो गुप्तश्चक्र-
गदाधरः ॥ ५८ ॥ वेधास्स्वाङ्गोऽजितः कृष्णो दृढस्सङ्कर्षणोऽच्युतः।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥ भगवान्भगहा-
नन्दी वनमाली हलायुधः । आदित्यो ज्योतिरादित्यस्सहिष्णुर्गतिस-
त्तमः ॥ ६० ॥ सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः । दिविस्पृ-
क्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥ त्रिसामा सामग-
स्साम निर्वाणं भेषजं भिषक् । सन्न्यासकृच्छमश्शान्तो निष्ठा-
शान्तिः परायणम् ॥ ६२ ॥ शुभाङ्गश्शान्तिदस्स्रष्टा कुमुदः कुव-
लेशयः । गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥
अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः । श्रीवत्सवक्षाः श्रीवा-
सश्श्रीपतिश्श्रीमतां वरः ॥ ६४ ॥ श्रीदश्श्रीशश्श्रीनिवासश्श्रीनिधि-
श्श्रीविभावनः । श्रीधरश्श्रीकरश्श्रेयश्श्रीमान् लोकत्रयाश्रयः ॥ ६५॥
स्वक्षस्स्वङ्गश्शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः । विजितात्मा विधेया-
त्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥ उदीर्णस्सर्वतश्चक्षुरनीश-
श्शाश्वतस्स्थिरः । भूशयो भूषणो भूतिरशोकश्शोकनाशनः ॥
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः । अनिरुद्धोऽप्रतिरथः
प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥ कालनेमिनिहा शौरिश्शूरश्शूरजने-
श्वरः । त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥
कामदेवः कामपालः कामी कान्तः कृतागमः । अनिर्देश्यवपुर्वि-
ष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥ ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म
ब्रह्मविवर्धनः । ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥
महाक्रमो महाकर्मा महातेजा महोरगः । महाक्रतुर्महायज्वा महा-

यज्ञो महाहविः ॥ ७२ ॥ स्तव्यस्स्तवप्रियस्स्तोत्रं स्तुतिस्स्तोता रण-
प्रियः । पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः । वसुप्रदो वासुदेवो वसुर्वसु-
मना हविः ॥ ७४ ॥ सद्गतिस्सत्कृतिस्सत्ता सद्भूतिस्सत्परायणः ।
शूरसेनो यदुश्रेष्ठस्सन्निवासस्सुयामुनः ॥ ७५ ॥ भूतावासो वासुदेवः
सर्वासुनिलयोऽनलः । दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥७६॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् । अनेकमूर्तिरव्यक्तश्शतमूर्ति-
श्शताननः ॥ ७७ ॥ एको नैकस्स वः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥ सुवर्णवर्णो
हेमाङ्गो वराङ्गश्चन्दनाङ्गदी । वीरहा विषमश्शून्यो घृताशी-
रचलश्चलः ॥ ७९ ॥ अमानी मानदो मान्यो लोकस्वामी
त्रिलोकधृक् । सुमेधा मेधजो धन्यस्सत्यमेधा धराधरः ॥ ८० ॥
तेजो वृषो द्युतिधरस्सर्वशस्त्रभृतां वरः । प्रग्रहो निग्रहो व्यग्रो
नैकशृङ्गो गदाग्रजः ॥ ८१ ॥ चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥ समावर्तो निवृत्ता-
त्मा दुर्जयो दुरतिक्रमः । दुर्लभो दुर्गमो दुर्गो दुरावासो दुरा-
रिहा ॥ ८३ ॥ शुभाङ्गो लोकसारङ्गस्सुतन्तुस्तन्तुवर्धनः । इन्द्र-
कर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥ उद्भवस्सुन्दरस्सुन्दो
रत्ननाभस्सुलोचनः । अर्को वाजसनिश्शृङ्गी जयन्तस्सर्वविज्जयी ॥
सुवर्णबिन्दुरक्षोभ्यस्सर्ववागीश्वरेश्वरः । महाह्रदो महागर्तो महाभूतो
महानिधिः ॥८६॥ कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः । अमृता-
शोऽमृतवपुस्सर्वज्ञस्सर्वतोमुखः ॥ ८७ ॥ सुलभस्सुव्रतस्सिद्धश्शत्रु-
जिच्छत्रुतापनः । न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ ८८ ॥
सहस्रार्चिस्सप्तजिह्वस्सप्तैधास्सप्तवाहनः । अमूर्तिरनघोऽचिन्त्यो भय-
कृद्भयनाशनः ॥ ८९ ॥ अणुर्बृहत्कृशस्स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतस्स्वधृतस्स्वास्यः प्राग्वंशो वंशवर्धनः ॥ ९० ॥ भारभृत्कथितो

योगी योगीशस्सर्वकामदः । आश्रमः श्रमणः क्षामस्सुपर्णो वायु
वाहनः ॥ ९१ ॥ धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितस्सर्वसहो नियन्ता नियमो यमः ॥ ९२ ॥ सत्ववान्
सात्विकस्सत्यस्सत्यधर्मपरायणः । अभिप्रायः प्रियार्होऽर्हः प्रियकृ
त्प्रीतिवर्धनः ॥ ९३ ॥ विहायसगतिर्ज्योतिस्सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनस्सूर्यस्सविता रविलोचनः ॥ ९४ ॥ अनन्तहुत
भुग्भोक्ता सुखदो नैकदोऽग्रजः । अनिर्विण्णस्सदामर्षी लोकाधिष्ठानम-
द्भुतः॥९५॥ सनात्सनातनतमः कपिलः कपिरव्ययः । स्वस्तिदस्स्वस्ति
कृत्स्वस्ती स्वस्तिभुक्स्वस्तिदक्षिणः ॥९६ ॥ अरौद्रः कुण्डली चक्री
विक्रम्यूर्जितशासनः । शब्दातिगश्शब्दसहश्शिशिरश्शर्वरीकरः ॥९७॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः । विद्वत्तमो वीतभयः पुण्य-
श्रवणकीर्तनः ॥ ९८ ॥ उत्तारणो दुष्कृतिहा पुण्यो दुस्स्वप्ननाशनः ।
वीरहा रक्षणस्सन्तो जीवनः पर्यवस्थितः ॥ ९९ ॥ अनन्तरूपोऽनन्त-
श्रीर्जितमन्युर्भयापहः । चतुरश्रो गभीरात्मा विदिशो व्यादिशो
दिशः ॥ १०० ॥ अनादिर्भूर्भुवो लक्ष्मीस्सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥ आधारनिलयो
धाता पुष्पहासः प्रजागरः । ऊर्ध्वगस्सत्पथाचारः प्राणदः प्रणवः
पणः ॥ १०२ ॥ प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः । तत्त्वं
तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥ भूर्भुवस्स्वस्तरुस्तार-
स्सविता प्रपितामहः । यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः १०४
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः। यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव
च ॥ १०५ ॥ आत्मयोनिस्स्वयंजातो वैखानस्सामगायनः । देवकी
नन्दनस्स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥ शङ्खभृन्नन्दकी चक्री
शार्ङ्गधन्वा गदाधरः । रथाङ्गपाणिरक्षोभ्यस्सर्वप्रहरणायुधः ॥ओम् ॥

श्री सर्वप्रहरणायुध ओंनम इति ।

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी।
श्रीमान्नारायणो विष्णु र्वासुदेवो ऽभिरक्षतु ॥

फलश्रुतिः।

इतीदं कीर्तनीयस्य केशवस्य महात्मनः। नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १०८ ॥ य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्। नाशुभं प्राप्नुयात् किञ्चित्सोऽमुत्रेह च मानवः ॥ १०९ ॥ वेदान्तगो ब्राह्मणस्स्यात् क्षत्रियो विजयी भवेत्। वैश्यो धनसमृद्धस्स्याच्छूद्रस्सुखमवाप्नुयात् ॥ ११० ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्। कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात् प्रजाः ॥ १११ ॥ भक्तिमान् यस्सदोत्थाय शुचिस्तद्गत मानसः। सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥ ११२ ॥ यशः प्राप्नोति विपुलं याति प्राधान्यमेव च। अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ ११३ ॥ न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति। भवत्यरोगो द्युतिमान् बल रूपगुणान्वितः ॥११४॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्। भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ११५ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्। स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ११६ ॥ वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः। सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ ११७ ॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित्। जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ ११८ ॥ इमं स्तवमधीयानश्श्रद्धाभक्तिसमन्वितः। युज्येतात्म सुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ ११९ ॥ नक्रोधो न च मात्सर्यं नलोभो नाशुभामतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १२० ॥ द्यौस्सचन्द्रार्कनक्षत्रा खंदिशो भूर्महोदधिः। वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १२१ ॥ ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्। जगद्वशे वर्ततेदं कृष्णस्य स-

चराचरम् ॥ १२२ ॥ इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेवच ॥ १२३ ॥ सर्वागमानामाचारः प्रथमं परिकल्पितः । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १२४ ॥ ऋषयः पितरो देवा महाभूतानि धातवः । जङ्गमाजङ्गमञ्चेदं जगन्नारायणोद्भवम् ॥ १२५ ॥ योगज्ञानं तथा साङ्ख्यं विद्याश्शिल्पादिकर्म च । वेदाश्शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १२६ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रीन्लोकान्व्याप्य भूतात्मा भुङ्क्तेविश्वभुगव्ययः ॥१२७॥ इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् । पठेद्य इच्छेत्पुरुषश्श्रेयः प्राप्तुं सुखानिच ॥ १२८ ॥ विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् । भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥१२९॥ न ते यान्ति पराभवं ओंनम इति ।

अर्जुन उवाच—

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥

श्रीभगवानुवाच—

यो मान्नामसहस्रेण स्तोतुमिच्छति पाण्डव । सोहमेकेन श्लोकेन स्तुतएव न संशयः ॥ स्तुतएव न संशय ओंनम इति ।

व्यास उवाच—

वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् । सर्वभूत निवासोसि वासुदेव नमोस्तुते ॥ श्रीवासुदेवनमोस्तुतओंनमइति ।

पार्वत्युवाच—

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥

ईश्वर उवाच ।

श्रीराम राम रामेति रमे रामे मनोरमे ।

सहस्रनामतत्तुल्यं रामनाम वरानने ॥

ब्रह्मोवाच—

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः॥ श्रीसहस्रकोटीयुगधारिण ओंनम इति।

सञ्जय उवाच—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥

श्रीभगवानुवाच—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ आर्ता विषण्णा शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः। सङ्कीर्त्य नारायण शब्दमात्रं विमुक्तदुःखास्सुखिनो भवन्तु॥ ओं तत्सत्॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
आनुशासनिक पर्वान्तर्गत दानधर्मपर्वणि
श्रीभीष्मयुधिष्ठिरसंवादे
श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रम्
सम्पूर्णम्

## ॥ श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ॥

श्रीमते रामानुजाय नमः ॥

श्रीभूमिरुवाच—

अलङ्कृतं जन्म पुंसामपि नन्दव्रजौकसाम्। तस्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ॥ १ ॥ यानि यानि प्रयुक्तानि सन्ति नामान्यनेकशः। मुख्यानि तेषु नामानि श्रोतुकामा

चिरादहम् ॥ २ ॥ एतानि ब्रूहि नामानि वासुदेवस्य वासुके। नातः परतरं पुण्यं त्रिषु लोकेषु मे भवेत् ॥ ३ ॥ शेष उवाच। वसुन्धरे वरारोहे सर्वकामसुखप्रदम् । सर्वमङ्गलमूर्द्धन्यमणिमाद्यष्टसिद्धिदम् ॥ ४ ॥ महापातककोटिघ्नं सर्वतीर्थफलप्रदम्। शृणु देवि प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ॥ ५ ॥ सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या च यत्फलम्। एकावृत्त्या च कृष्णस्य नामैकं तत्प्रयच्छति । तस्मात्पुण्यतमं चैतत्स्तोत्रं शृणु वसुन्धरे ॥ ६ ॥ ओं अस्य श्रीकृष्णाष्टोत्तरशतनामामृतस्तोत्रमन्त्रस्य श्रीशेषो भगवानृषिः । अनुष्टुप् छन्दः । श्रीकृष्णः परमात्मा देवता । श्रीकृष्णप्रसादसिद्ध्यर्थे जपे विनियोगः । ध्यानम् । बालाय नीलवपुषे नव किङ्किणीकजालाभिरामजघनाय दिगम्बराय। शार्दूलदिव्यनखभूषण भूषिताय नन्दात्मजाय नवनीतमुषे नमस्ते ॥ ओं श्रीकृष्णः कमलानाथो वासुदेवः सनातनः । वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ ७ ॥ श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः। चतुर्भुजात्तचक्राब्जगदाशङ्खाद्युदायुधः ॥ ८ ॥ देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः । यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ९ ॥ पूतनाजीविताहारः शकटासुरखण्डनः। नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ १० ॥ नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः। नवनीतनवाहारो मुचुकुन्दप्रसादकः ॥ ११ ॥ षोडशस्त्रीसहस्रेशस्त्रिभङ्गीललिताकृतिः । शुकवागमृताब्धीन्दुर्गोविन्दो योगिनांपतिः ॥ १२ ॥ वत्सवाटचरोऽनन्तो धेनुकासुरखण्डनः। तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ॥ १३ ॥ उत्तालतालभेत्ता च तमालश्यामलाकृतिः। गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥१४ इलापतिः परञ्ज्योतिर्यादवेन्द्रो यदूद्वहः । वनमाली पीतवासाः पारिजातापहारकः ॥ १५ ॥ गोवर्द्धनाचलोद्धर्ता गोपालः सर्वपालकः।

अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥ १६ ॥ मधुहा मथुरा नाथो द्वारकानायको बली । वृन्दावनान्तसञ्चारी तुलसीदामभूषणः ॥ १७ ॥ स्यमन्तकमणेर्हर्ता नरनारायणात्मकः । कुब्जाकृष्टाम्बरधरो मायी परमपूरुषः ॥ १८ ॥ मुष्टिकासुरचाणूरमल्लयुद्धविशारदः । संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ॥ १९ ॥ अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः । शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥२०॥ विदुराक्रूरवरदो विश्वरूपप्रदर्शक । सत्यवाक्सत्यसङ्कल्पः सत्यभामा रतो जयी ॥ २१ ॥ सुभद्रापूर्वजो जिष्णुर्भीष्ममुक्तिप्रदायकः । जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः ॥ २२ ॥ वृषभासुरविध्वंसी बाणासुरकरांतकः । युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ २३ ॥ पार्थसारथिरव्यक्तो गीतामृतमहोदधिः । कालीयफणमाणिक्यरञ्जितश्रीपदाम्बुजः ॥ २४ ॥ दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशकः । नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥ २५ ॥ जलक्रीडासमासक्तगोपीवस्त्रापहारक. । पुण्यश्लोकस्तीर्थपदो वेदवेद्यो दया निधिः ॥ २६ ॥ सर्वभूतात्मकः सर्वग्रहरूपी परात्परः । एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ॥ २७ ॥ कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा । स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया श्रुतम् ॥ ॥ २८ ॥ कृष्णनामामृतं नाम परमानन्दकारणम् । अनुपद्रवदुःखघ्नं परमायुर्विवर्धनम् ॥२९॥ दानं व्रतं तपस्तीर्थं यत्कृतं त्विह जन्मनि । पठतां शृण्वतां चैव फलं कोटिगुणं भवेत् ॥ ३० ॥ पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् । धनावहं दरिद्राणां जयेच्छूनां जयावहम् । ॥ ३१ ॥ शिशूनां गोकुलानां च पुष्टिदं पूर्णपुण्यदम् । समस्तकामदं दिव्यं कोटिजन्माघनाशनम् ॥ ३२ ॥ अन्ते च कृष्णस्मरणं भवतापत्रयापहम् । कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ॥ ३३ ॥ नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने । इमं मन्त्रं

महादेवि ब्रह्मनिष्ठो दिवानिशम् ॥ ३४ ॥ मनसा चिन्तयन्नित्यं जपन् शुद्धशरीरभाक्। सर्वग्रहानुग्रहभाक् सर्वप्रियतमो नरः ॥३५॥ पुत्रपौत्रैः परिवृतः समृद्धं फलमाप्नुयात्। विलस्य भोगानन्ते च कृष्णसायुज्यमाप्नुयात् ॥ ३६ ॥ शङ्खचक्रगदापाणे द्वारकानिलयाच्युत। गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥ ३७ ॥ इति श्रीशेषधरणीसंवादे कृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

—०—

## ॥ नारायणाष्टकम् ॥

श्रीमते रामानुजाय नमः। वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात्। सेव्यः श्रीपतिरेक एव जगतामेते च षट्साक्षिणः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १ ॥ प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय स्तम्भे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः। वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादयन्नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥ श्रीरामात्र विभीषणोऽयमनघो रक्षोभयादागत· सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम्। इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवानार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३ ॥ नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोः सुराः पाल्यन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः। मा भैषीरिति यस्य नक्रहनने चक्रायुधश्रीधरः आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४ ॥ भोः कृष्णाच्युत भोः कृपालय हरे भोः पाण्डवानां सखे क्वासि क्वासि सुयोधनादपहृतां भो रक्ष मामातुराम्। इत्युक्तोऽक्षयवस्त्रसंभृततनुं योऽपालयद्द्रौपदीमार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५ ॥ यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं यन्नामामृत

पूरकं च पिबतां संसारसन्तारकम् । पाषाणोऽपि यदङ्घ्रिपद्मरजसा शापान्मुनेर्मोचितः आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ६ ॥ पित्रा भ्रातरमुत्तमासनगतं चौत्तानपादिर्ध्रुवो दृष्ट्वा तत्सममारुरुक्षुरधृतो मात्राऽवमानं गतः । यं गत्वा शरणं तदाप तपसा हेमाद्रिसिंहासनमार्तत्राणपरायणस्स भगवान्नारायणो मे गतिः ॥७॥ आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः । सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥ ८ ॥ इति श्रीमन्नारायणाष्टकम् सम्पूर्णम् ॥ .... .... ....

— ❋ —

श्रीरस्तु ।

श्री कुलशेखरसूरये नमः ।

श्रीमते रामानुजाय नमः ।

श्री कुलशेखरसूरिभिरनुगृहीता

## मुकुन्दमाला ॥

घुष्यते यस्य नगरे रङ्गयात्रा दिनेदिने ।
तमहं शिरसा वन्दे राजानं कुलशेखरम् ॥

श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति । नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिपदं कुरु मां मुकुन्द ॥ १ ॥ जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २ ॥ मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् । अविस्मृतिस्त्वच्चरणारविन्दे भवेभवे मेऽस्तु भवत्प्रसादात् ॥ ३ ॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् । रम्या रामा मृदुतनुलता नन्दने नापि रन्तुं भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ४ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम् । एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ५ ॥ दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥६॥ कृष्ण त्वदीयपदपङ्कजपञ्जरान्तः अद्यैव मे विशतु मानसराजहंसः । प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ७ ॥ चिन्तयामि हरिमेव सन्ततं मन्दमन्दहसिताननाम्बुजम् । नन्दगोपतनयं परात्परं नारदादिमुनिवृन्दवन्दितम् ॥ ८ ॥ करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे । हरिसरसि विगाह्यापीय तेजोजलौघं भवमरुपरिखिन्नःखेदमद्य त्यजामि ॥ ९ ॥ सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरम स्वचित्त रन्तुम् । सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ १० ॥ माभीर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातनाः नामी नः प्रभवन्ति पापरिपवस्स्वामी ननु श्रीधरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ ११ ॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् । विषमविषयतोये मज्जतामप्लवानां भवतु शरणमेको विष्णुपोतो नराणाम् ॥ १२ ॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मास्म गाः कातरत्वम् । सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १३ ॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसंघाकुले च । संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्

पादाम्भोजे वरद भवतो भक्तिनामं प्रयच्छ ॥ १४ ॥ माद्राक्षं क्षीण-पुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे माश्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम् । मास्मार्षं माधव त्वामपि भुवनपते चेतसाऽपह्नुवानान् माभूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेऽपि ॥ १५ ॥ जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व समर्चयाच्युतकथाश्श्रोत्रद्वय त्वं शृणु । कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥ १६ ॥ हे लोकाश्शृणुत प्रसूति मरणव्याधेश्चिकित्सामिमां योगज्ञास्समुदाहरन्ति मुनयो यां याज्ञवल्क्यादय । अन्तर्ज्योतिरमेयमेकममृत कृष्णाख्यमापीयतां तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥ १७ ॥ हे मर्त्याः परमं हित शृणुत वो वक्ष्यामि संक्षेपतस्संसारार्णवमापदूर्मिबहुलं सम्यक्प्रविश्य स्थिताः । नानाज्ञानमपास्य चेतसि नमो नारयणायेत्यमुं मन्त्रं सप्रणवं प्रणाममहितं प्रावर्तयध्वं मुहुः ॥ १८ ॥ पृथ्वी रेणुरणु पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघुः तेजो नि॰ श्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः । क्षुद्रा रुद्रपितामहप्रभृतयःकीटास्समस्तास्सुरा दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ १९ ॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैस्सरोमोद्गमैः कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना । नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनां अस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम् ॥ २० ॥ हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव । हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥ २१ ॥ भक्तापायभुजङ्गगारुडमणिस्त्रैलोक्यरक्षामणिः गोपीलोचनचातकाम्बुदमणिस्सौन्दर्यमुद्रामणिः । यः कान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः श्रेयो देवशिखामणिर्दिशतु नो गोपालचू-

ग्रामणिः ॥ २२ ॥ शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसम्पूज्यमन्त्रं संसारोत्तारमन्त्रं समुपचिततमस्सङ्घनिर्याणमन्त्रम् । सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥ २३ ॥ व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्येन्द्रार्तिकरौषधं त्रिभुवने सञ्जीवनैकौषधम् । भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं श्रेयःप्राप्तिकरौषधं पिब मनश्श्रीकृष्णदिव्यौषधम् ॥ २४ ॥ आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं मेदश्छेदफलानि पूर्तविधयस्सर्वे हुतं भस्मनि । तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्मृतीर्विजयते देवस्स नारायणः ॥२५॥ श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्रापुर्वाञ्छितं पापिनोऽपि । हा नः पूर्वं वाक्प्रवृत्ता न तस्मिन् तेन प्राप्तं गर्भवासादिदुःखम् ॥२६॥ मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीयमदनुग्रह एष एव । त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २७ ॥ नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति । यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूका वराका वयम् ॥ २८ ॥ मदन परिहर स्थितिं मदीये मनसि मुकुन्दपदारविन्दधाम्नि । हरनयनकृशानुना कृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः ॥ २९ ॥ तत्त्वं ब्रुवाणानि परं परस्मान्मधु क्षरन्तीव सतां फलानि । प्रवर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥ ३० ॥ इदं शरीरं परिणामपेशलं पतत्यवश्यं श्लथसन्धिजर्जरम् । किमौषधैः क्लिश्यसि मूढ दुर्मते निरामयं कृष्णरसायनं पिब ॥ ३१ ॥ दारा वाराकरवरसुता ते तनूजो विरिञ्चस्स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः । मुक्तिर्माया जगदविकलं तावकी देवकी ते माता मित्रं बलरिपुसुतस्त्वय्यतोऽन्यन्न जाने ॥ ३२ ॥

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमस्याम्यहं कृष्णेनामरशत्रवो विनिहताः कृष्णाय तस्मै नमः । कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं कृष्णे तिष्ठति सर्वमेतदखिलं हे कृष्ण संरक्ष माम् ॥ ३३ ॥ स त्वं प्रसीद भगवन्कुरु मय्यनाथे विष्णो कृपां परमकारुणिकः किल त्वम् । संसारसागरनिमग्नमनन्त दीनं उद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ ३४ ॥ नमामि नारायणपादपङ्कजं करोमि नारायणपूजनं सदा । वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥ ३५ ॥ श्रीनाथ नारायण वासुदेव श्रीकृष्ण भक्तप्रिय चक्रपाणे । श्रीपद्मनाभाच्युत कैटभारे श्रीराम पद्माक्ष हरे मुरारे ॥ ३६ ॥ अनन्त वैकुण्ठ मुकुन्द कृष्ण गोविन्द दामोदर माधवेति । वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनाभिमुख्यम् ॥ ३७ ॥ ध्यायन्ति ये विष्णुमनन्तमव्ययं हृत्पद्ममध्ये सततं व्यवस्थितम् । समाहितानां सततामयप्रदं ते यान्ति सिद्धिं परमां च वैष्णवीम् ॥ ३८ ॥ क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ ३९ ॥ यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ मित्रे द्विजन्मवरपद्मशरावभूताम् । तेनाम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥ ४० ॥ मुकुन्दमाला समाप्ता ।

---

श्रीयामुनमुनिभिरनुगृहीता

## चतुःश्लोकी ।

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥ * ॥ कान्तस्ते पुरुषोत्तमः फणिपतिश्शय्यासनं वाहनं वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी । ब्रह्मेशादिसुरव्रजस्सदयितस्त्वद्दासदासीगणः श्रीरित्येव च नाम ते भगवति ब्रूमः

कथं त्वां वयम् ॥ १ ॥ यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः । तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो लोकैकेश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥ २ ॥ ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् । श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥ ३ ॥ शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरेः मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् । यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि तान्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥ ४ ॥ आकारत्रयसम्पन्नामरविन्दनिवासिनीम् । अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥

चतुःश्लोकी समाप्ता ॥

—०—




श्रीयामुनमुनिभिरनुगृहीतं

## स्तोत्ररत्नम् ।

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् । स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वयम् ॥ * ॥ नमो नमो यामुनाय यामुनाय नमो नमः । नमो नमो यामुनाय यामुनाय नमो नमः ॥* ॥

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये । नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ १ ॥ तस्मै नमो मधुजिदङ्घ्रिसरोजतत्त्वज्ञानानुरागमहिमातिशयान्तसीम्ने । नाथाय नाथमुनयेऽत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् ॥ २ ॥ भूयो नमोऽपरिमिताच्युतभक्तितत्त्वज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः । लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगाय नाथमुनये यमिनां वराय ॥ ३ ॥

तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः । सन्दर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥ ४ ॥ माता पिता युवतयस्तनया विभूतिस्सर्वं यदेव नियमेन मदन्वयानाम् । आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥ ५ ॥ यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथपथस्सकलस्समेति । स्तोष्यामि नः कुलधनं कुलदैवतं तत्पादारविन्दमरविन्दविलोचनस्य ॥६॥ तत्त्वेन यस्य महिमार्णवशीकराणुश्शक्यो न मातुमपि शर्वपितामहाद्यैः । कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ ७ ॥ यद्वा श्रमावधि यथामति वाप्यशक्तः स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः । वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः को मज्जतोरणुकुलाचलयोर्विशेषः ॥ ८ ॥ किञ्चैष शक्त्यतिशयेन न तेऽनुकम्प्यस्स्तोताऽपितु स्तुतिकृतेन परिश्रमेण । तत्र श्रमस्तु सुलभो मम मन्दबुद्धेरित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥ ९ ॥ नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो भवितुमेव कुतः प्रवृत्तिः । एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥ १० ॥ स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः । ब्रह्मा शिवश्शतमखःपरमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ ११ ॥ कश्श्रीः श्रियः परमसत्त्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः । कस्यायुतायुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम्॥१२॥ वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदानैः । कोऽन्यः प्रजापशुपती परिपाति कस्य पादोदकेन स शिवस्स्वशिरोधृतेन ॥ १३ ॥ कस्योदरे हरविरिञ्चिमुखः प्रपञ्चः को रक्षतीममजनिष्ट च कस्य नाभेः । क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः कः केन वैष परवानिति शक्यशङ्कः ॥ १४ ॥ त्वां शीलरूपचरितैः

परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः । प्रख्या॥तदैवपरमा-
र्थविदां मतैश्च नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ १५ ॥ उल्लं-
घितत्रिविधसीमसमातिशायिसंभावनं तव परिव्रढिमस्वभावम् ।
मायाबलेन भवतापि निगूह्यमानं पश्यन्ति केचिदनिशं त्वदनन्य-
भावाः ॥ १६ ॥ यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि
यानि च । गुणाःप्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभू-
तयः ॥ १७ ॥ वशी वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरः
स्थिरस्समः । कृती कृतज्ञस्त्वमसि स्वभावतस्समस्तकल्याणगुणा-
मृतोदधिः ॥ १८ ॥ उपर्युपर्यब्जभुवोऽपि पूरुषान् प्रकल्प्य ते ये
शतमित्यनुक्रमात् । गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नो-
द्यमतोऽतिशेरते ॥ १९ ॥ त्वदाश्रितानां जगदुद्भवस्थितिप्रणाश-
संसारविमोचनादयः । भवन्ति लीला विधयश्च वैदिकास्त्वदीयग-
म्भीरमनोऽनुसारिणः ॥ २० ॥ नमो नमो वाङ्मनसातिभूमये नमो
नमो वाङ्मनसैकभूमये । नमो नमोऽनन्तमहाविभूतये नमो नमोऽन-
न्तदयैकसिन्धवे ॥२१॥ न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमां-
स्त्वच्चरणारविन्दे । अकिञ्चनोऽनन्यगतिश्शरण्य त्वत्पादमूलं शरणं
प्रपद्ये ॥ २२ ॥ न निन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया
व्यधायि । सोऽहं विपाकावसरे मुकुन्द क्रन्दामि संप्रत्यग-
तिस्तवाग्रे ॥ २३ ॥ निमज्जतोऽनन्तभवार्णवान्तश्चिराय मे कूल-
मिवासि लब्धः । त्वयापि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं
दयायाः ॥ २४ ॥ अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं
हि दुःखम् । किंतु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनु-
रूपः ॥ २५ ॥ निरासकस्यापि न तावदुत्सहे महेश हातुं तव पाद-
पङ्कजम् । रुषा निरस्तोऽपि शिशुस्स्तनन्धयो न जातु मातुश्चरणौ
जिहासति ॥ २६ ॥ तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा
कथमन्यदिच्छति । स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं

ष्टि वीक्षते ॥ २७ ॥ त्वदंघ्रिमुद्दिश्य कदापि केनचिद्यथा तथा वापि सकृत्कृतोऽञ्जलिः । तदैव मुष्णात्यशुभान्यशेषतश्शुभानि पुष्णाति न जातु हीयते ॥ २८ ॥ उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृतिम् । प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकरः ॥ २९॥ विलासविक्रान्तपरावरालयं नमस्यदार्तिक्षपणे कृतक्षणम् । धनं मदीयं तव पादपङ्कजं कदा नु साक्षात्करवाणि चक्षुषा ॥ ३० ॥ कदा पुनश्शंखरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् । त्रिविक्रम त्वच्चरणाम्बुजद्वयं मदीयमूर्धानमलङ्करिष्यति ॥ ३१ ॥ विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविम् । निमग्ननाभिं तनुमध्यमुन्नतं विशालवक्षस्स्थलशोभिलक्षणम् ॥ ३२ ॥ चकासतं ज्याकिणकर्कशैः शुभैश्चतुर्भिराजानुविलम्बिभिर्भुजैः । प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः ॥ ३३ ॥ उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम् । मुखश्रिया न्यक्कृतपूर्णनिर्मलामृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम् ॥ ३४ ॥ प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम् । शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकम् ॥ ३५ ॥ स्फुरत्किरीटाङ्गदहारकण्ठिकामणीन्द्रकाञ्चीगुणनूपुरादिभिः । रथाङ्गशङ्खासिगदाधनुर्वरैर्लसत्तुलस्या वनमालयोज्ज्वलम् ॥ ३६ ॥ चकर्थ यस्या भवनं भुजान्तरं तव प्रियं धाम यदीयजन्मभूः । जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च ॥ ३७॥ स्ववैश्वरूप्येण सदानुभूतयाऽप्यपूर्ववद्विस्मयमादधानया । गुणेन रूपेण विलासचेष्टितैस्सदा तवैवोचितया तव श्रिया ॥ ३८ ॥ तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि । फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ॥ ३९ ॥ निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इती

रिते जनैः ॥ ४० ॥ दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः । उपस्थितं तेन पुरो गरुत्मता, त्वदंघ्रिसम्मर्दकिणाङ्कशोभिना ॥ ४१ ॥ त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा । प्रियेण सेनापतिना न्यवेदि तत्तथाऽनुजानन्तमुदारवीक्षणैः ॥ ४२ ॥ हताखिलक्लेशमलैस्स्वभावतस्सदानुकूल्यैकरसैस्तवोचितैः । गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम् ॥ ४३ ॥ अपूर्वनानारसभावनिर्भरप्रबद्धया मुग्धविदग्धलीलया । क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम् ॥ ४४ ॥ अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम् । श्रियश्श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम् ॥ ४५ ॥ भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिश्शेषमनोरथान्तरः । कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः ॥ ४६ ॥ धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष ! योऽहं योगिवर्याग्रगण्यैः । विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः ॥ ४७ ॥ अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे ! कृपया केवलमात्मसात्कुरु ॥ ४८ ॥ अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि । भगवन्भवदुर्दिने पथः स्खलितं मामवलोकयाच्युत ॥४९॥ न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः । यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ ! दुर्लभः ॥ ५० ॥ तदहं त्वदृते न नाथवान् मदृते त्वं दयनीयवान्न च । विधिनिर्मितमेतदन्वयं भगवन्पालय मास्म जीहपः ॥ ५१ ॥ वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः । तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥ ५२ ॥ मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव । नियतस्वमिति प्रबुद्धधीरथवा किन्नु समर्पयामि

ते ॥ ५३ ॥ अनवबोधितवानिमां यथा मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां भगवन्भक्तिमपि प्रयच्छ मे ॥ ५४ ॥ तव
दास्यसुखैकसङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे । इतरावसथेषु मा-
स्म भूदपि मे जन्म चतुर्मुखात्मना ॥ ५५ ॥ सकृत्त्वदाकारविलो-
कनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः । महात्मभिर्मामवलोक्य-
तां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः ॥ ५६ ॥ न देहं न प्राणान्न
च सुखमशेषाभिलषितं न चात्मानं नान्यत्किमपि तव शेषत्ववि-
भवात् । बहिर्भूतं नाथ क्षणमपि सहे यातु शतधा विनाशं तत्सत्यं
मधुमथन विज्ञापनमिदम् ॥ ५७ ॥ दुरन्तस्यानादेरपरिहरणीयस्य
महतो निहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि । दयासिन्धो बन्धो
निरवधिकवात्सल्यजलधे तव स्मारंस्मारं गुणगणमितीच्छामि गत
भीः ॥ ५८ ॥ अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रजस्तमश्छन्न-
श्छद्मस्तुतिवचनभङ्गीमरचयम् । तथापीत्थंरूपं वचनमवलम्ब्यापि
कृपया त्वमेवैवंभूतं धरणिधर मे शिक्षय मनः ॥ ५९ ॥ पिता त्वं
माता त्वं दयिततनयस्त्वं प्रियसुहृत्त्वमेव त्वं मित्रं गुरुरसि गति-
श्चासि जगताम् । त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं प्रपन्नश्चैवं
सत्यहमपि तवैवास्मि हि भरः ॥ ६० ॥ जनित्वाऽहं वंशे महति
जगति ख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसामधोऽधः पापात्मा शरणद
निमज्जामि तमसि ॥ ६१ ॥ अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः । नृशंसः पापिष्ठः कथमह-
मितो दुःखजलधेरपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥ ६२ ॥
रघुवर ! यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यच्च चैद्यस्य
कृष्ण ! । प्रतिभवमपराद्धुर्मुग्ध ! सायुज्यदोऽभूर्वद किमपदमागस्तस्य
तेऽस्ति क्षमायाः ॥ ६३ ॥ ननु प्रपन्नस्सकृदेव नाथ तवाहमस्मीति
च याचमानः । तवानुकम्प्यस्स्मरतः प्रतिज्ञां मदेकवर्जं किमिदं व्रतं

ते ॥ ६४ ॥ अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम्।
पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥ ६५ ॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम्॥

स्तोत्ररत्नं समाप्तम्।

---

श्रीकाञ्चीपूर्णमुनिभिरनुगृहीतं

# देवराजाष्टकम्।

श्रीमत्काञ्चीमुनिं वन्दे कमलापतिनन्दनम्।
वरदाङ्घ्रिसदासङ्गरसायनपरायणम्॥
देवराजदयापात्रं श्रीकाञ्चीपूर्णमुत्तमम्।
रामानुजमुनेर्मान्यं वन्देऽहं सज्जनाश्रयम्॥

नमस्ते हस्तिशैलेश! श्रीमन्नम्बुजलोचन!। शरणं त्वां प्रपन्नोऽस्मि प्रणतार्तिहराच्युत! ॥ १ ॥ समस्तप्राणिसन्त्राणप्रवीणकरुणोल्बण। विलसन्तु कटाक्षास्ते मय्यस्मिञ्जगतां पते! ॥ २ ॥ निन्दिताचारकरणं निवृत्तं कृत्यकर्मणः। पापीयांसममर्यादं पाहि मां वरदप्रभो! ॥ ३ ॥ संसारमरुकान्तारे दुर्व्याधिव्याघ्रभीषणे। विषयक्षुद्रगुल्माढ्ये तृपापादपशालिनि ॥ ४ ॥ पुत्रदारगृहक्षेत्रमृगतृष्णाम्बुपुष्कले। कृत्याकृत्यविवेकान्धं परिभ्रान्तमितस्ततः ॥ ५ ॥ अजस्रं जाततृष्णार्तमवसन्नाङ्गमक्षमम्। क्षीणशक्तिबलारोग्यं केवलं क्लेशसंश्रयम् ॥ ६ ॥ सन्तप्तं विविधैर्दुःखैर्दुर्वचैरेवमादिभिः। देवराज! दयासिन्धो! देवदेव! जगत्पते! ॥ ७ ॥ त्वदीक्षणसुधासिन्धुवीचिविक्षेपशीकरैः। कारुण्यमारुतानीतैश्शीतलैरभिषिञ्च माम्॥

देवराजाष्टकं समाप्तम्।

---

श्रीमगवद्रामानुजमुनिभिरनुगृहीते गद्यत्रये

## शरणागति गद्यम्।

यो नित्यमच्युतपदाम्बुजयुग्मरुक्म व्यामोहतस्तदितराणि तृणाय मेने । अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये ॥

वन्दे वेदान्तकर्पूरचामीकरकरण्डकम् ।
रामानुजार्यमार्याणां चूडामणिमहर्निशम् ॥

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणाम्, पद्मवनालयाम्, भगवतीम्, श्रियम्, देवीम्, नित्यानपायिनीम्, निरवद्याम्, देवदेवदिव्यमहिषीम्, अखिलजगन्मातरम्, अस्मन्मातरम्, अशरण्यशरण्याम्, अनन्यशरणश्शरणमहं प्रपद्ये ॥ १ ॥

पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्दशरणागतिर्यथाऽवस्थिताऽविरताऽस्तु मे ॥ २ ॥

अस्तु ते ॥ ३ ॥

तयैव सर्वं सम्पत्स्यते ॥ ४ ॥

अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूप ! स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूप ! स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजस्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारु-

ण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यस-
ङ्कल्पकृतित्वकृतज्ञताद्यसङ्ख्येयकल्याणगुणगणौघमहार्णव ! स्वोचि-
तविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसु-
खस्पर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहा-
रकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुण-
नूपुराद्यपरिमितदिव्यभूषण ! स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदा-
शार्ङ्गाद्यसंख्येयनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुध ! स्वा
भिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिका-
तिशयासङ्ख्येयकल्याणगुणगणश्रीवल्लभ ! एवम्भूतभूमिनीलाना-
यक ! स्वच्छन्दानुवर्तिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूप-
नित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणशेषशेषाशनगरु-
डप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगल !
परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्वाभिमतविविधविचि-
त्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभ-
वानन्तपरिमाणनित्यनिरवद्यनिरतिशयवैकुण्ठनाथ ! स्वसङ्कल्पानु-
विधायिस्वरूपस्थितिप्रवृत्तिस्वशेषतैकस्वभावप्रकृतिपुरुषकालात्मक-
विविधविचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थानरूपनिखि-
लजगदुदयविभवलयलील ! सत्यकाम ! सत्यसङ्कल्प ! परब्रह्म-
भूत ! पुरुषोत्तम ! महाविभूते ! श्रीमन् ! नारायण ! श्रीवैकुण्ठ-
नाथ ! अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे !
अनालोचितविशेषाशेषलोकशरण्य ! प्रणतार्तिहर ! आश्रितवात्स-
ल्यैकजलधे ! अनवरतविदितनिखिलभूतजातयाथात्म्य ! अशेषच-
राचरभूतनिखिलनियमननिरत ! अशेषचिदचिद्वस्तुशेषिभूत ! नि-
खिलजगदाधार ! अखिलजगत्स्वामिन् ! अस्मत्स्वामिन् ! सत्य-
काम ! सत्यसङ्कल्प ! सकलेतरविलक्षण ! अर्थिकल्पक ! आपत्स-

म ! श्रीमन् ! नारायण ! अशरण्यशरण्य ! अनन्यशरणस्त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये ॥ ५ ॥

[अत्र द्वयम् ॥ ]।

पितरं मातरं दारान् पुत्रान्बन्धून् सखीन् गुरून्। रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥ ६ ॥ सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान्। लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ॥७॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव। त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥ ८ ॥

पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥९॥

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्। पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ १० ॥

मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारान्, आरब्धकार्यान्, अनारब्धकार्यान्, कृतान्, क्रियमाणान्, करिष्यमाणांश्च सर्वानशेषतः क्षमस्व ॥ ११ ॥

अनादिकालप्रवृत्तविपरीतज्ञानं आत्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥ १२ ॥

मदीयानादिकर्मप्रवाहप्रवृत्ताम्, भगवत्स्वरूपतिरोधानकरीम्, विपरीतज्ञानजननीम्, स्वविषयायाश्च भोग्यबुद्धेर्जननीम्, देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थिताम्, दैवीम्, गुणमयीम्, मायाम्: दासभूतम् ' शरणागतोऽस्मि: तवास्मि दासः' इति वक्तारं मां तारय ॥ १३ ॥

"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते; प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितस्सहि युक्तात्मा मामेवानुत्तमां गतिम् ॥ बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवस्सर्वमिति स माहात्मा सुदुर्लभः" । इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व॥१४॥

"पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया, भक्त्या त्वनन्यया शक्यः, मद्भक्तिं लभते पराम्" इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व ॥ १५ ॥

परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरुष्व ॥ १६ ॥

परभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवोऽहं तथाविधभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥ १७ ॥

एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयाऽवक्लृप्तसमस्तवस्तुविहीनोऽपि, अनन्ततद्विरोधिपापाक्रान्तोऽपि, अनन्तमदपचारयुक्तोऽपि, अनन्तमदीयापचारयुक्तोऽपि, अनन्तासह्यापचारयुक्तोऽपि, एतत्कार्यकारणभूतानादिविपरीताहङ्कारविमूढात्मस्वभावोऽपि, एतदुभयकार्यकारणभूतानादिविपरीतवासनासम्बद्धोऽपि, एतदनुगुणप्रकृतिविशेषसम्बद्धोऽपि, एतन्मूलाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखतद्धेतुतदितरोपेक्षणीयविषयानुभवज्ञानसङ्कोचरूप मच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नप्रतिहतोऽपि येन केनापि प्रकारेण द्वयवक्ता त्वं केवलं मदीययैव दयया निश्शेषविनष्टसहेतुकमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नः,मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिः, मत्प्रसादादेव साक्षात्कृतयथावस्थितमत्स्व-

च्छेनोद्गतिधुतव्यावर्तितावर्तवत्संवर्तार्णवनीरपूरविलुठत्पाठीनदिव्याकृतेः । सिंहाद्रीश ! न वैभवं तव कथं स्वालस्यमालक्ष्यते पद्माक्षस्य जुघुक्षतोऽपि विभवं लक्ष्मीधराधोक्षज ! ॥ ९० ॥ साचलावटतटाकदीर्घिकाजाह्नवीजलविवर्धितः क्षये । शृङ्गसङ्गमितनौर्मनोरभूत्प्रतोऽण्डजवपुर्हि सुन्दर ! ॥ ९१ ॥ प्रलयजनीरपूरपरिपूरितस्वनिलयावसन्नवदनश्रमदशरण्यभूतशरणार्थिनाकिशरणं भवन् स्वकृपया । चलदुदधीरितास्बुकलुषीक्रियाढयगमनस्वपृष्ठविधृताचलकुल एष मीनतनुरत्र सुन्दरभुजो वनाद्रिनिलयः ॥ ९२ ॥ स्वपृष्ठे प्रष्ठाद्रिभ्रमणकरणैः किञ्च फणिनः विकृष्टिव्याकृष्टिव्यतिविघुतदुग्धाब्धिचलितैः । अविस्पन्दो नन्दन् विकसदरविन्देक्षणरुचिः पुराऽभूस्सिंहाद्रेः प्रियतम ! हरे ! कच्छपवपुः ॥ ९३ ॥ जगत्प्रलीनं पुनरुद्धिधीर्षतस्सिंहक्षितिक्षिभिलयस्य ! सुन्दर ! । पुरा वराहस्य तवेयमुर्वरा दंष्ट्राह्वयेन्दोः किल लक्ष्म लक्षिता ॥ ९४ ॥ न वायुः पस्पन्दे ययतुरथवाऽस्तं शशिरवी दिशोऽनश्यन् विश्वाप्यचलदचला साचलकुला । नभश्च प्रश्च्योति कथितमपि पाथो नरहरौ त्वयि स्तम्भे शुम्भद्वपुषि सति हे सुन्दरभुज ! ॥९५ ॥ अरालं पातालं त्रिदशनिलयः प्रापितलयो धरित्री निर्धूता ययुरपि दिशः कामपि दिशम् । अजृम्भिष्टाऽम्भोधिर्घुघुघुमिति घूर्णन् मुररिपोः विभिन्दाने वक्षस्त्वयि नरहरौ सुन्दरभुज ! ॥ ९६ ॥ नखक्रकचकप्रथिक्रथितदैत्यवक्षःस्थलीसमुत्थरुधिरच्छटाच्छुरितबिम्बितं स्वं वपुः । विलोक्य कुपितः पुनः प्रतिमृगेन्द्रशङ्कावशाय एष नरकेसरी स इह दृश्यते सुन्दरः ॥ ९७ ॥ क्षितिरियं जनसंहृतिपालनैर्निगिरणोद्गिरणोद्धरणैरपि । वनगिरीन्द्र ! तवैव सती कथं वरद ! वामन ! भिक्षणमर्हति ॥ ९८ ॥ भार्गवः किल भवन् भवान्पुरा कुन्दसुन्दरवनाचलेश्वर ! अर्जुनस्य चलदर्पितस्य तु छेत्स्यति स्मरति बाहुकाननम् ॥ ९९ ॥ आज्ञा तवात्र भवती विदिता त्रयी मा धर्मं तदुक्तमखिलेन वनाद्रिनाथ ! । अन्यू

नमाचरितुमास्तिकशिक्षणार्थमत्रावतीर्य किल सुन्दर ! राघवोऽभूः ॥ १०० ॥ वनगिरिपतिरीशितेति देवैः त्रिपुरहरत्रिपुरघ्नचापभङ्गाद् । व्यगणि परशुरामदर्शितस्य स्वकधनुषः परिमर्ददर्शनाच्च॥१०१॥ अनवाप्तमत्र किल लिप्स्यते जनैर्न च लब्धमेतदिह भोक्तुमिष्यते । अनवाप्तमत्र किल नास्ति राम ! तज्जगती त्वया तृणमवैक्षि सुन्दर ! ॥ १०२ ॥ शिखरिषु विपिनेष्वप्यापगास्वच्छतोयास्वनुभवसि रसज्ञो दण्डकारण्यवासान् । तदिह तदनुभूतौ साभिलाषोऽद्य राम ! श्रयसि वनगिरीन्द्रं सुन्दरीभूय भूयः ॥ १०३ ॥ उपवनतरुषण्डैर्मण्डिते गण्डशैलप्रणयिभवदुदन्तोद्गायिगन्धर्वसिद्धे । वनगिरितटभूमिप्रस्तरे सुन्दर ! त्वं भजसि नु मृगयानानुद्रवश्रान्तिशान्तिम्॥१०४॥ कूलेऽब्धेः किल दक्षिणस्य निवसन्बूरोचराम्भोधिगान् दैत्यानेकपतत्रिणाऽच्छिन इतीयं किंवदन्ती श्रुता । तत्रैवेश्वरमम्भसां व्यजयथास्तसाद्वनाद्रीश्वर ! श्रीमन् ! सुन्दर ! सेतुबन्धनमुखाः क्रीडास्तवाडम्बरम् ॥ १०५ ॥ रघुकुलतिलकस्त्वं जातुचिद्यातुधानच्छलमृगमृगयायां सम्प्रसक्तः पुराऽभूः । तदुपजनितखेदच्छेदनायाद्य गायन्मधुकरतरुषण्डं रज्यसे किं वनाद्रिम् ॥ १०६ ॥ हे सुन्दरैकतरजन्मनि कृष्णभावे द्वे मातरौ च पितरौ च कुले अपि द्वे । एकक्षणादनुगृहीतवतः फलं ते नीला कुलेन सदृशी किल रुक्मिणी च ॥ १०७ ॥ त्वं हि सुन्दर ! यदा स्तनन्धयः पूतनास्तनमधास्तदा नु किम् । जीर्णमेव जठरे पयोविषं दुर्जरं वद तदात्मना सह ॥१०८॥ आश्रितेषु सुलभो भवन् भवान् मर्त्यतां यदि जगाम सुन्दर ! । अस्तु नाम तदुलूखले कियदामबद्ध इति किं तदाऽरुदः ॥ १०९ ॥ सुन्दरोरुभुज ! नन्दनन्दनस्त्वं भवन् अमरविभ्रमालकः । मन्दिरेषु नवनीततस्करं वल्लवीथियमुत व्यचूचुरः ॥११०॥ कालियस्य फणतां शिरस्तु मे सत्कदम्बशिखरस्त्वमेव वा । वष्टि नुष्टवनशैल ! सुन्दर ! त्वत्पदाब्जयुगमर्पितं ययोः ॥ १११ ॥ गूहितस्वमहिमाऽपि सुन्दर!

त्वं व्रजे किमिति शक्रमाक्रमीः । सप्तरात्रमदधाश्च किं गिरिं पृच्छतश्च सुहृदः किमक्रुधः ॥ ११२ ॥ हे नन्दनन्दन ! सुसुन्दर ! सुन्दराह्व ! वृन्दावने विहरतस्तव वल्लवीभिः । वेणुध्वनिश्रवणतस्तरुभिस्तदा वै सद्भावभिर्जितुविलायमहो ! विलिख्ये ॥ ११३ ॥ गायंगायं वनगिरिपते ! त्वं हि वृन्दावनान्तर्गोपीसंघैर्विहरसि यदा सुन्दर ! व्यूढवाहो ! । रासारम्भोत्सवबहुविधप्रेमसीमन्तिनीनां चेतश्चेतस्तव च तु तदा का दशामन्वभूताम् ॥ ११४ ॥ इङ्गिते निमिषितं च तावकं रम्यमद्भुतमतिप्रियङ्करम् । तेन कंसमुखकीटशासनं सुन्दराव्यक्तमपि प्रशस्यते ॥ ११५ ॥ वाराणसीदहनपौण्ड्रकमर्दमभङ्गकल्पद्रुमाहरणशङ्करजृम्भणाद्याः । अन्याश्च भारतबलकथनादयस्ते क्रीडास्सुसुन्दरभुज ! श्रवणामृतानि ॥ ११६ ॥ त्वं हि सुन्दर ! वनाद्रिनाथ ! हे वेङ्कटाह्वयनगेन्द्रमूर्धनि । देवसेवितपदाम्बुजद्वयः संश्रितेभ्य इह तिष्ठसे सदा ॥ ११७ ॥ हस्तिशैलनिलयो भवन् भवान् साम्प्रतं वरदराजसाह्वयः । इष्टमर्थमनुकम्पया ददद्विश्वमेव दयते हि सुन्दर ! ॥ ११८ ॥ मध्ये क्षीरपयोधिशेषशयने शेषे सदा सुन्दर ! त्वं तद्वैभवमात्मनो भुवि भवद्भक्तेषु वात्सल्यतः । विभाव्याखिलनेत्रपात्रमिह सन् सह्योद्भवायास्तटे श्रीरङ्गे निजधाम्नि शेषशयने शेषे वनाद्रीश्वर ! ॥ ११९ ॥ कल्कीभविष्यन् कलिकल्कदूषितान्दुष्टानशेषान् भगवन् ! हनिष्यसि । स एष तस्यावसरस्सुसुन्दर ! प्रशाधि लक्ष्मीश ! समक्षमेव नः ॥ १२० ॥ ईदृशास्त्वदवतारसत्तमास्सर्व एव भवदाश्रिताञ्जनान् । त्रातुमेव न कदाचिदन्यथा तेन सुन्दर ! भवन्तमाश्रये ॥ १२१ ॥ त्वामामनन्ति कवयः करुणामृताब्धिं त्वामेव संश्रितजनिमसुपभमेषाम् । येषां भजन्निह हि लोचनगोचरस्त्वं हे सुन्दराह्व ! परिचस्करिषे वनाद्रिम् ॥ १२२ ॥ अशक्यं नो किञ्चित्तव न च न जानासि निखिलं दयालुः क्षन्ता त्वामहमपि न चागांसि तरितुम् । क्षमोऽतस्त्वच्छेषो ह्यगतिरिति च

क्षुद्र इति च क्षमस्वैतावतोऽप्यलमिह हरे! सुन्दरभुज!॥ १२३॥
लङ्कायुद्धहतान् हरीन् द्विजसुतं शम्बूकदोषान्मृतं सान्दीपिन्यभिजं
मृतं द्विजसुतान् बालांश्च वैकुण्ठगान्। गर्भेश्वाऽऽनुनिसम्भवं न्युदधर
स्त्वेनैव रूपेण यः स्वामीष्टं मम मद्गुरोश्च ददसे नो किं वनाद्री-
श्वर!॥ १२४॥ आयोध्यिकान् सपशुकीटतृणांश्च जन्तून् किङ्कर्म-
णो नु वत! कीदृशवेदनाढ्यान्। सायुज्यलभ्यविभवाखिजनित्य-
लोकान् सान्तानिकानगमयो वनशैलनाथ!॥ १२५॥ हरितवार-
णभृत्यसमाह्वयं करिगिरौ वरदस्त्वमपूर्विकाम्। इयमलम्भय एव हि
सुन्दर! स्फुटमदाश्च परश्शतमीदृशम्॥ १२६॥ इह च देव!
ददासि वरान् परान् वरद! सुन्दर! सुन्दरदोर्धर!। वनगिरेर-
भितस्तटमावसन्नखिललोचनगोचरवैभवः॥ १२७॥ इदमिमे
शृणुमो मलयध्वजं नृपमिह स्वयमेव हि सुन्दर!। चरणसात्कृत-
मानिति तद् वयं वनगिरीश्वर! ज्ञातमनोरथाः॥ १२८॥ विज्ञापनां
वनगिरीश्वर! सत्यरूपामङ्गीकुरुष्व करुणार्णव! मामकीनाम्। श्री
रङ्गधामनि यथापुरमेव सोऽहं रामानुजार्यवशगः परिवर्तिषीय
॥ १२९॥ किञ्चैदं च विरिञ्चिभावन! वनाद्रीश! प्रभो! सुन्दर!
प्रत्याख्यानपराङ्मुखो वरदतां पश्यन्नवश्यं शृणु। श्रीरङ्गश्रियम-
न्वहं प्रगुणयंस्त्वद्भक्तभोग्यां कुरु प्रत्यक्षं सुनिरस्तमेव विदधत्प्रत्य-
र्थिनां प्रार्थनम्॥ १३०॥ कारुण्यामृतवारिधे! वृषपते! हे सत्य-
सङ्कल्पन! श्रीमन्! सुन्दर! योग्यताविरहितवानुत्सार्य सद्वत्सल!।
क्षाम्यन् साधुजनैः कृतांस्तु निखिलानेवापचारान् क्षणात् तद्गो-
प्यामनिशं कुरुष्व भगवन्! श्रीरङ्गधामश्रियम्॥ १३१॥ इदं
भूयो भूयः पुनरपि च भूयः पुनरपि स्फुटं विज्ञीप्सामीत्यगतिर-
बुधोऽनन्यशरणः। कृतागा दुरात्मा कलुषमतिरस्मीत्यनवधेः दया-
यास्ते पात्रं वनगिरिपते! सुन्दरभुज!॥ १३२॥

पञ्चस्तव्यां सुन्दरबाहुस्तवस्समाप्तः।

श्रीश्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्यां

## वरदराजस्तवः ।

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे ।
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

स्वस्ति हस्तिगिरिमस्तशेखरस्सन्तनोतु मयि सन्ततं हरिः । निस्समाभ्यधिकमभ्यधत्त यं देवमौपनिषदी सरस्वती ॥ १ ॥ श्रीनिधिं निधिमपारमर्थिनामर्थितार्थपरिदानदीक्षितम् । सर्वभूतसुहृदं दयानिधिं देवराजमधिराजमाश्रये ॥ २ ॥ नित्यमिन्द्रियपथातिगं महो योगिनामपि सुदूरगं धियः । अप्यनुश्रवशिरस्सु दुर्ग्रहं प्रादुरस्ति करिशैलमस्तके ॥ ३ ॥ वल्लिका श्रुतिमतल्लिकामयी येन पल्लवितविश्वशाखया । स्वश्रिया करिगिरेरनुक्रियां वष्टि भूष्टवरदं तमाश्रये ॥ ४ ॥ यं परोक्षमुपदेशतस्त्रयी नेति नेति परपर्युदासतः । वक्ति यस्तमपरोक्षमीक्षयत्येष तं करिगिरिं समाश्रये ॥ ५ ॥ एव ईश इति निर्णयं त्रयी भागधेयरहितेषु नोदिशेत् । हस्तिधामनि न निर्णयेत को देवराजमयमीश्वरस्त्विति ॥ ६ ॥ हे कुदृष्टयमिनिविष्टचेतसां निर्विशेषसविशेषताश्रयम् । संशयं करिगिरिर्नुदत्यसौ तुङ्गमङ्गलगुणास्पदे हरौ ॥ ७ ॥ न्यायतर्कमुनिमुख्यभाषितैश्शोधितैस्सह कथञ्चन त्रयी । जोपयेद्धरिमनंहसो जनान् हस्तिधाम सकलं जनं स्वयम् ॥ ८ ॥ अद्भुतं महदसीमभूमकं किञ्चिदस्ति किल वस्तु निस्तुलम् । इत्यघोपि यदिदं तदग्रतस्तथ्यमेव करिधाम्नि दृश्यते ॥ ९ ॥ संवदेत किल यत्प्रमान्तरैस्तत्प्रमाणमिति ये हि मेनिरे । तन्मतेऽपि किल मानतां गता हस्तिनाऽध्य परवस्तुनि त्रयी ॥ १० ॥ गुणायत्तं लोके गुणिषु हि मतं मङ्गलपदं विपर्यस्तं हस्तिक्षितिधरपते ! तत्त्वयि पुनः । गुणास्सत्यज्ञानप्रभृतय उतं त्वद्गततया शुमी-

भूयं याता इति हि निरणैष्म श्रुतिवशात् ॥ ११ ॥ निराबाधं नित्यं निरवधि निरंहो निरुपमं सदा शान्तं शुद्धं प्रतिभटमवद्यस्य सततम्। परं ब्रह्माम्नातं श्रुतिशिरसि यत्तद्वरद! ते परं रूपं साक्षात्तदिदम- पदं वाङ्मनसयोः ॥ १२ ॥ प्रशान्तानन्तात्मानुभवजमहानन्दमहि- मप्रसक्तस्तैमित्यानुकृतवितरङ्गार्णवदशम्। परं यत्ते रूपं स्वसदृश- दरिद्रं वरद! त्रय्यी पिस्पृक्षन्ती परनिरसने श्राम्यति परम् ॥१३॥ न वक्तुं न श्रोतुं न मनितुमथोपासिसिषितुं न च द्रष्टुं स्प्रष्टुं तदनु न च भोक्तुं हि सुशकम्। परं यद्वस्तूक्तं ननु वरद! साक्षात्तदसि भोः कथं विश्वसे त्वं करिगिरिपुरस्तिष्ठस इह ॥ १४ ॥ प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद! परमा शक्तिरपि च। परं तेजश्चेति प्रवरगुणषट्कं प्रथमजं गुणानां निस्सीम्नां गणनविगु- णानां प्रसवभूः ॥ १५ ॥ गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुग! युगलैर्हि त्रिभिरभूः। व्यवस्था या चैया ननु वरद! साऽऽविष्कृतिवशाद्भवान् सर्वत्रैव त्वगणितमहामङ्ग- लगुणः ॥ १६ ॥ इयं वैयूही वै स्थितिरथ किलेच्छाविहृतये विभूती- नां मध्ये सुरनरतिरश्चामवतरन्। सजातीयस्तेषामिति च विभवा- ख्यामपि भजन् करीश! त्वं पूर्णो वरगुणगणैस्तान् स्थगयसि ॥ १७ ॥ परो वा व्यूहो वा विभव उत वाऽर्चावतरणो भवन् वाऽन्तर्यामी वरवरद! यो यो भवसि वै। स स त्वं सन्नैशान् वर- गुणगणान् बिभ्रदखिलान् भजद्भ्यो भास्येवं सततमितरेभ्यस्त्वित- रथा ॥ १८ ॥ दयाक्षान्त्यौदार्यप्रदिमसमतासौहृदधृतिप्रसादप्रेमा- ज्ञाऽऽश्रितसुलभताद्या वरगुणाः। तथा सौन्दर्याद्यास्तव वरदराजो- त्तमगुणाः विसीमानोऽसंख्याः प्रणतजनभोग्यं प्रसुवते ॥ १९ ॥ अ- नन्याधीनत्वं तव किल जगुर्वैदिकगिरः पराधीनं त्वां तु प्रणतपर- तन्त्रं मनुमहे। उपालम्भोऽयं भोः श्रयति बत! सार्वज्ञ्यमपि ते यतो दोषं भक्तेष्विह वरद! नैवाकलयसि ॥ २० ॥ पाणिपादवदनेक्षण-

शब्दैरम्बुजान्यय ईशन् वरद ! त्वम् । गाढुभिस्त्वतिविशालतमालानाञ्जनं करिगिरेरसि भृङ्गम् ॥ २१ ॥ त्वामुदारभुजमुन्नसमायतकर्णपाशपरिकर्मितमंसम् । आयताक्षमभिजातकपोलं पारणीयति वरप्रद ! दृङ्मे ॥ २२ ॥ नीलमेघनेममञ्जनपुञ्जश्यामकुन्तलमनन्तशयं त्वाम् । अब्जपाणिपदमम्बुजनेत्रं नेत्रसात्कुरु करीश ! सदा मे ॥ २३ ॥ त्वञ्च दृक्च निपिबामति जिह्वा निह्वला श्रवणरत्नरसृजौ । नासिका त्वयि करीश ! तयेति प्राप्नुयां कथमिमां स्विदवस्थाम् ॥ २४ ॥ आधिराज्यमधिकं भुवनानामीश ! ते पिशुनयन् किल मौलिः । चूलिकामणिमहन्मणीयेर्हस्तिभूषण ! भवत्युदयाद्रिः ॥ २५ ॥ उद्धरत्युपरि भक्तजनानित्यूर्ध्वताश्रयणमुचितशक्तिम् । ऊर्ध्वपुण्ड्रतिलकं बहुमानात्किं बिभर्षि वरद ! स्वललाटे ॥२६॥ कर्णिका तव करीश ! किमेषा कर्णभूषणमुतांसविभूषा । अंसलम्भ्यलयभूषणयोर्मे मानमस्य मम वा परिकर्म ॥ २७ ॥ पारिजातविटपानभितो या पुष्पसम्पदुदियात्करिनाथ ! । तां विडम्बयति तावकबाहुप्रलतता तु कटकाङ्गदलक्ष्मीः ॥ २८ ॥ मध्यगानचलफेनिलसिन्धुप्रोथितिक्षणदशां गमितौ ते । वक्षसि स्फुरितमौक्तिकहारे कौस्तुभश्च कमला च करीश ! ॥ २९ ॥ अञ्जनक्षितिभृतो यदि नामोपत्यका वरद ! हेममयी स्यात् । तादृशी तव निभाति तु लक्ष्मीराम्बरी धृत ! विडम्बितविद्युत् ॥ ३० ॥ पारभागमियाद्रवेस्तमिस्रा वरदाय त्वयि तमिस्रामयाम । गमिता तव वक्त्रचित्रभानोः परमार्गं ननु कुन्तली तमिस्रा ॥ ३१ ॥ उभयोरपि पक्षयोस्तिथिर्या विषमीभावनिरासदाऽष्टमीति । उपमानजसम्पदे हि सेन्दोर्वरदाभ्रूयुतो ललाटलक्ष्म्या ॥ ३२ ॥ अलकालिचिकीर्षया किलात्ता सुपरीक्षिषया ललाटपट्टे । समर्पी निकषीकृता भ्रुवौ ते वरद ! स्वाद्वकृतत्वतन्तु नैवम् ॥ ३३ ॥ श्रवमश्च दृशश्च शब्दरूपग्रहणे ते नहि जीवदव्यवस्था । उभयोरभिलेक्षणक्षमत्वाद्वरदातः श्रवणाश्रये

दृशौ ते ॥ ३४ ॥ करुणारसवाहिवीक्षणोर्मेर्वरद ! प्रेममयप्रवाहभाजः । तततीरवनावली भ्रुवौ द्वचलसिन्धोस्तव नासिकेव सेतुः ॥ ३५ ॥ विमलं विवृणोति विस्तृणीते रुचमाविष्कुरुते कृपामपाराम् । अभिरर्पति हर्षमार्द्रभावं तनुते ते वरदेश दृष्टिपातः ॥ ३६ ॥ अरुणाधरपल्लवे लसन्ती वरदामी द्विजचन्द्रचन्द्रिका ते । अधिविद्रुममस्तनिस्तलालीरुचमाविष्कुरुते हि पुष्कराक्ष ! ॥ ३७ ॥ सितनिर्झरिका विनिष्पतन्ती तव वक्षःस्थलभूतले विकीर्णा । वरद ! प्रथिमातं हारलक्ष्मीमयि मुक्तावलिका नदीव तज्ज्ञा ॥ ३८ ॥ परिमण्डिततरासमण्डलाभिर्वरदाघ्राततमीष्टगोपिकाभिः । अनुवर्तितदातनप्रहर्षादिव फुल्लं हि कपोलयोर्युगं ते ॥ ३९ ॥ मुखमुन्नमनमायताक्षमुद्यत्सितदन्तं रुचिराधरं नतभ्रु । लसदंसविलम्बिकर्णपाशं मयि ते निश्चलमस्तु हस्तिनाथ ! ॥ ४० ॥ पद्मायाः प्रणयरमास्समासजन्त्यास्त्वं धार्तुं सुघटुमतो भुजेन तेन । कां नामान्वभवदहो ! दशां तदास्ते कण्ठस्ते करिगिरिनाथ ! कम्बुकान्तः ॥४१॥ सायामा धृतपरिणद्धयोऽक्षयो वा तादृश्यः स्फुटमथवा दिशश्चतस्रः । चत्वारो वरद ! वरप्रदास्त्वदीया भासन्ते भुजपरिघास्तमालनीलाः ॥ ४२ ॥ आश्लेषे वरद ! भुजास्तवेन्दिरायाः गोपीनामभिश्रतरासबन्धने वा । बन्धे वा मुदमथिकां यशोदयाऽहो सम्प्रापुस्तव नवनीतमोषदोषात् ॥ ४३ ॥ सालीया इव विटपास्सपल्लवाग्राः कल्लोला इव जलधेस्सविद्रुमाग्राः । भोगीन्द्रा इव च फणामणीद्धवक्त्रा भासन्ते वरद ! भुजास्तवारुणाग्राः ॥ ४४ ॥ अम्भोधेस्त्वयमभिमन्थनं चकर्थ क्षोणीधं पुनरविभश्च सागराग्रम् । सङ्गानां विवलयसिस कण्ठमुष्णामम्लाना वरद ! तथापि पाणयस्ते ॥ ४५ ॥ रिङ्गातो व्रजसदनाङ्गणेषु किं ते गोपस्त्रीग्रहणवशान्नु गोपगोष्ठ्याम् । आलम्बाद्धयनयसूत्रतोऽथयोर्वा पार्ष्णीनां वरद ! तवारुणत्वमासीत् ॥ ४६ ॥ सर्वज्ञास्समुचितशक्तयस्त्वदेव स्वत्सेवानियमजुषस्त्वदेक-

भोगाः । हेतीनामधिपतयस्सदा किमेतान् शोभार्थं वरद ! बिभर्षि हर्षतो वा ॥ ४७ ॥ किं धातुर्गगनविधानमातृकाऽभूद्वक्षस्ते वरद ! वरेण्य ! यत्र नाम । पद्माया मुखमथ कौस्तुभश्च जातौ चन्द्रार्कौ-डुडुनिकरायते तु हारः ॥ ४८ ॥ अण्डानां त्वदुदरमामनन्ति सन्तः स्थानं तद्वरद ! कथन्नु कार्श्यमस्य । माहात्म्यं स्वत इह येषु नून-मेषामृद्धिस्स्यान्महिमकरी न हीतरेषाम् ॥ ४९ ॥ सौन्दर्यामृतरस-धाहवेगजस्स्यादावर्तस्तव किल पद्मनामनाभिः । तत्पद्मं वरद ! विभाति कान्तिमय्या लक्ष्म्यास्ते सकलवपुर्जुषो नु सद्म ॥ ५० ॥ या दामोदर इति नामदा तवासीत्सा दामा किल किणकारिणीबभूव । तन्नूनं वरद ! वलित्रयच्छलेन त्वन्मध्यप्रथमविभूषणीबभूव ॥ ५१ ॥ पाद्मबीजाध्युषितभुवि यद्वस्तु हस्तीश ! जातं तस्माद्वृक्षं फलति हि फलं त्वय्यपीक्षामहे तत् । यस्मादण्डाध्युषित उदरे तावके जाय-मानं पद्मं पद्मानन ! किल फलत्यण्डषण्डानखण्डान् ॥ ५२ ॥ अङ्गे यङ्गे-श्वर ! किल जने काप्यदर्शि विमर्शं विश्वाधीशः कतम इति तन्निर्णयं वर्णयामः । व्यापक्रोशी नृषु समुदिता यानुपाश्रित्य तेऽपि ब्रह्माद्या-स्ते वरद ! जनितास्तुन्दकन्दारविन्दे ॥ ५३ ॥ मुग्धकृष्णः प्रिय-निजजनैर्जय्यईयद्वशीनं दाम्ना भूम्ना वरद ! हि यया त्वं यशोदाकराभ्याम् । बद्धो बन्धक्षपणकरणीं तां किलाद्यापि मातुः प्रेम्णा गात्राभरणमुदराबन्धनाख्यं बिभर्षि ॥ ५४ ॥ सौन्दर्याख्या सरिदुरसि विस्तीर्य मध्यावरुद्धा स्थानाल्पत्वाद्विपमगतिजावर्तगर्ता-भनाभिः । प्राप्य प्राप्तप्रथिम जघनं विस्तृता हस्तिनाथ ! स्रोतो-भेदं भजति भवतः पाददेशापदेशात् ॥ ५५ ॥ रम्भास्तम्भाः करि-वरकराः कारभास्मारभाजो वेपाश्लेपा अपि मरकतस्तम्भमुख्यास्तु-लाख्याः । साम्यं सम्यग्वरद ! न दधुस्सर्वमुर्वोस्त्वदूर्वोर्न ह्यैश्वर्यं द[illegible]ति न तथा यौवनारम्भजृम्भाः ॥ ५६ ॥ या ते गात्रे वरद ! ज[illegible]निता कान्तिमय्यापगाऽभूत्तस्यास्स्रोतोयुगलमिह यद्याति पादप्र-

यादम् । तज्जातोर्व्वंत्रमियुगमिवोद्भाजुनी जानुनी ते सादुक्ष्णोर्वी ककुदयुगलं यौवनैश्वर्यनाम्नोः ॥ ५७ ॥ प्रेम्णाऽऽधातुं करिगिरिशिरोऽधोमुखीभावभाजोरंघ्रिद्वन्द्वाह्वयकमलयोर्दण्डकाण्डायमाने । अद्रिस्पर्शोद्भवसुखत उत्कण्टके रोमहर्षाद्दृष्टदृष्टिर्वरद ! किमलं लङ्घितुं जङ्घिके ते ॥ ५८ ॥ भक्तानां यद्वपुषि दहरं पण्डितं पुण्डरीकं यचाम्लानं वरद ! सततात्र्यासनादासनाब्जम् । आम्नायानां यदपि च शिरो यच्च मूर्धा शठारेर्हस्त्यद्रेर्वा किमतिसुखदं तेषु पादाब्जयोस्ते ॥ ५९ ॥ पद्मास्वद्याङ्गुलिषु वरद ! प्रान्ततः कान्तिसिन्धोर्वीचीवीथीविभवसुभगीष्वम्भसो लम्भितासु । बिन्दुश्रेन्दुः प्रतिफलनजां सम्पदं किं पदं ते छायाच्छद्मा नखवितातितां लम्भितश्चुम्भितस्सन् ॥ ६० ॥ शम्भोरम्भोरुहभुव ! सखा सन् सहाङ्कश्शशाङ्कः कुर्वन्सेवां वरद ! विकलो वृत्तहीनस्सुवक्रः । त्वत्पादाब्जे प्रियमख ! नखच्छद्मनाऽऽश्रित्य नित्यं सद्वृत्तोऽभूत्स च दशगुणः पुष्कलो निष्कलङ्कः ॥ ६१ ॥ त्वत्पादाब्जे प्रजाता सुरसरिदभवत्प्राक् चतुर्धा ततस्तास्वेकां धत्ते ध्रुवस्सा त्रिभुवनमपुनात्त्रीन्पथो भावयन्ती । तत्रैका खं व्रजन्ती शिवयति तु शिवं सा पुनस्ससमधाऽभूत्तास्वेका गां पुनाना वरद ! सगरजस्वर्गसर्गं चकार ॥ ६२ ॥ परिजनपरिबर्हाभूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते । परमपदमथाण्डान्यात्मदेहस्तथात्मा वरद ! सकलमेतत्संश्रितार्थं चकर्थ ॥ ६३ ॥ अनाप्तं प्राप्तव्यं न तव किल किञ्चिद्वरद ! ते जगज्जन्मक्षेमप्रलयविषयो धीविलसितम् । तथापि क्षोदीयस्सुरनरकुलेष्वाश्रितजनान्समाश्लेष्टुं पेष्टुं तदसुखकृतां चावतरसि ॥ ६४ ॥ विवेकधियमेकतो ह्यभिनिवेशलेशो हरेन्महत्त्वमभिनिवेशनं किमुत तन्महिम्नस्तव । अहो ! विसदृशे जगत्यवततर्थ पार्थादिकं निजं जनमुदश्रयन्वरद ! तं समाश्लेषकः ॥ ६५ ॥ संश्लेषे भजतां त्वरावरवशः कालेन संशोष्य तानानीय स्वपदे स्वस-

क्रमकृतं सोढुं विलम्बं व्रत ! । अक्षाम्यन् क्षमिणां वरो वरद ! सभ्रश्रावतीर्णो भवेः किनाम त्वमगंश्रितेषु वितरन् वेपं वृणीषे तु तान् ॥ ६६ ॥ वरद ! यदि न शुव्यन्नातरिप्यश्श्रुतिविहितास्त्वदुपसनार्चनाद्याः । करणपथविदूरगे सति त्वयि अविषयतानिकृताः किलाभविष्यन् ॥ ६७॥ यदपराधसहस्रमजस्रजं त्वयि शरण्य ! हिरण्य उपावहत् । वरद ! तेन चिरं त्वमविक्रियो विकृतिमर्भकनिर्भंजनादगाः ॥ ६८ ॥ त्वामामनन्ति कवयः करुणामृताब्धे ! ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः । एतेषु केन वरदोत्तरकोसलस्थाः पूर्वं सदूर्यमभजन्त हि जन्तवस्त्वाम् ॥ ६९ ॥ भजत्सु वात्सल्यवशात्समुत्सुकः प्रकाममत्रावतरेर्वरप्रद ! । भवेश्च तेषां सुलभोऽथ किंनिदं यदङ्गदासा नियतः पुराऽरुदः ॥ ७० ॥ नरसिंहतनुरगौणी समसमयसमुद्भवश्च भक्तगिरः । स्तम्भे च सम्भवस्ते पिशुनयति परेशतां वरद ! ॥ ७१ ॥ तापत्रयीमयदवानलदह्यमानं ग्रुह्यन्तमन्तमवयन्तमनन्त ! नैव । त्रातुं प्रयातुमुपयातुमनीशमीश ! हस्तीश ! हृदयमूतवृष्टिभिरामजेथाः ॥ ७२ ॥ नानाविरुद्धविदिशासु दिशासु चाहो वन्ध्यैर्मनोरथशतैर्युगपद्विकृष्टः । त्वत्पादयोरनुदितस्पृह एष सोऽहं न स्वस्ति हस्तिगिरिनाथ ! निशामयामि ॥ ७३ ॥ हे निर्भयोऽस्म्यविनयोऽस्मि यतस्त्वदंघ्री लिप्सामलब्धवति चेतसि दुर्विनीते । दुष्कर्मवर्मपरिकर्मित एष सोऽहमग्रे वरप्रद ! तव प्रलपामि किञ्चित् ॥ ७४ ॥ सव्याधिराधिरवितुष्टिरनिष्टयोगस्त्वामीष्टभञ्जनममर्षकरो निकर्षः । कृन्तन्ति सन्ततमिमानि मनो मदीयं हस्तीश ! न त्वदभिलापनिधिप्रहाणिः ॥ ७५ ॥ विद्वेषमानमदरागविलोभमोहाद्याजानभूमिरहमत्र भवे निमज्जन् । निर्द्वन्द्व ! नित्यनिरवद्यमशगुणं त्वां हस्तीश ! कथयितुमीक्षितुमीप्सितुं वा ॥७६॥ पुत्रादयः कथममी मयि संस्थिते स्युरित्यप्रतिक्रियनिरर्थकचिन्तनेन । दूये न तु स्वयमहं भविताऽस्मि कीदृगित्यस्ति हस्ति गिरिनाथ !

विमर्शलेशः ॥ ७७ ॥ शम्पाचलं बहुलदुःखमनर्थहेतुरल्पीय इत्यपि विमृष्टिषु दृष्टदोषम् । दुर्वासनादृढिमतस्सुखमिन्द्रियोत्थं हातुं न मे मतिरलं वरदाधिराज ! ॥ ७८ ॥ बुद्ध्वा च नो च विहिताकरणैर्निषिद्धसंसेवनैस्त्वदपचारशतैरसंख्यैः । भक्तागसामपि शतैर्भवताऽप्यगण्यैर्हस्तीश ! याकृतनुमनोजनितैर्हतोऽस्मि ॥ ७९ ॥ त्वद्दास्यमस्य हि मम स्वरसप्रसक्तं तच्चोरयन्नयमहं किल चस्खल प्राक् । त्वं मामकीन इति मामभिमन्यसे स्म हस्तीश ! संशमय नस्तमिमं विवादम् ॥ ८० ॥ भोगा इमे विधिशिवादिपदं च किञ्च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता । सर्वं तदूपजलजोपमहं जुषेय हस्त्यद्रिनाथ ! तव दास्यमहारसज्ञः ॥ ८१ ॥ विषयविषधरव्रजव्याकुले जननमरणनक्रचक्रास्पदे । अगतिरशरणो भवाब्धौ लुठन् वरद ! शरणमित्यहं त्वां वृणे ॥ ८२ ॥ अकृतसुकृतकस्सुदुष्कृतरः शुभगुणलवलेशदेशातिगः । अशुभगुणपरस्सहस्राश्रितो वरदमुरुदयं गतिं त्वां वृणे ॥ ८३ ॥ शरणवरणवागियं योदिता न भवति बत ! सापि धीपूर्विका । इति यदि दयनीयता मय्यहो ! वरद ! तव भवेत्ततः प्राणिमि ॥ ८४ ॥ निरवधिषु कृतेषु चागस्स्वहो ! मतिरनुशयिनी यदि स्यात्ततः । वरद ! हि दयसे न संशेमहे निरनुशयधियो हता हे ! वयम् ॥ ८५ ॥ शरणवरणवागियं याद्य मे वरद ! तदधिकं न किञ्चिन्मम । सुलभमभिमतार्थदं साधनं तदयमवसरो दयायास्तव ॥ ८६ ॥ विषयविषयिणी स्पृहा भूयसी तव तु चरणयोर्न साऽल्पापि मे । वरद ! ननु भरस्तवैव स्वयं यदुत तव पदस्पृहा जन्म मे ॥ ८७ ॥ इयमिह मतिरस्मदुज्जीवनी वरद ! तव खलु प्रसादात्स्ते । शरणमिति वचोऽपि मे नोदियात्त्वमसि मयि ततः प्रसादोन्मुखः ॥ ८८ ॥ वरद ! यदिह वस्तु वाञ्छाम्यहं तव चरणलभाविरोधस्ततः । यदि न भवति तच्च देहि प्रभो ! झटिति वितर पादमेवान्यथा ॥ ८९ ॥ तदपि किमपि

हन्त! दुर्वासनाशतविवशतया यदभ्यर्थये। तदतुलदय! सार्व!
सर्वप्रद! प्रवितर वरद! क्षमाम्भोनिधे! ॥ ९० ॥ प्रियमितरद-
थापि वा यद्यथा वितरसि वरदप्रभो! त्वं हि मे। तदनुभवनमेव
युक्तं तु मे त्वयि निहितभरोऽस्मि सोऽहं यतः ॥ ९१ ॥ यथासि
यावानसि योऽसि यद्गुणः करीश! यादृग्विभवो यदिङ्गितः।
तथाविधं त्वाऽहममक्तदुर्ग्रहं प्रपत्तिवाचैव निरीक्षितुं वृणे ॥ ९२ ॥
अये! दयालो! वरद! क्षमानिधे! विशेषतो विश्वजनीन! वि-
श्वद!। हितज्ञ! सर्वज्ञ! समग्रशक्तिक! प्रसह्य मां प्रापय दा-
स्यमेव ते ॥ ९३ ॥ स्वकैर्गुणैस्स्वैश्चरितैस्स्ववेदनाद्भजन्ति ये त्वां
त्वयि भक्तितोऽथवा। करीश! तेषामपि तावकी दया तथास्वकृत्-
सैव तु मे फलं मतम् ॥ ९४ ॥ यदि त्वभक्तोऽप्यगुणोऽपि निष्क्रि-
यो निरुद्यमो निष्कृतदुष्कृतो न च। लभेय पादौ वरद! स्फुटा-
स्ततः क्षमादयाद्यास्तव मङ्गला गुणाः ॥ ९५ ॥ विलोकनैर्विभ्रम-
पैरपि भुवोः स्मितामृतैरिङ्गितमङ्गलैरपि। प्रचोदितस्ते वरद!
प्रहृष्टधीः कदा विधास्ये परिचसनं तव ॥ ९६ ॥ विविश्य विश्वे-
न्द्रियतर्पकैर्वर्णैर्मनःस्थले नित्यनिरातनिश्चलाः। सुधासखीर्हृ-
स्तिपते! सुशीतलाः गिरः श्रवस्याऽशृणुयाम तावकीः ॥ ९७ ॥
अशेषदेशाखिलकालयोगिनीष्वहं त्ववस्थास्वखिलास्वनन्यधीः। अ-
शेषदासैककरतिस्तदाचरन् करीश! वर्तेय सदा त्वदन्तिके ॥ ९८ ॥
इमं जनं हन्त! कदाऽभिवेक्ष्यति त्वदक्षिनद्योर्वरद! श्रमापहा।
अकृत्रिमप्रेमरसप्रवाहजा विनृत्वरी वीक्षणवीचिसन्ततिः ॥ ९९ ॥
सदातनत्वेऽपि तदातनत्वयन्त्रीभवत्प्रेमरसप्रवाहया। निषेवितं
त्वां मननोदरस्या धिया करीश! पश्येम शरच्छतं समाः ॥ १०० ॥
... सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम्। अचि-
... वरप्रद! त्वत्पदमाप्नुयां कथम् ॥ १०१ ॥

रामानुजांघ्रिशरणोऽस्मि कुलप्रदीपस्त्वासीत्स यामुनमुनेस्स च नाथवंश्यः । वंश्यः पराङ्कुशमुनेस्स च सोऽपि देव्याः दासस्तवेति वरदासि तवेक्षणीयः ॥ १०२ ॥

पञ्चस्तव्यां वरदराजस्तवस्समाप्तः ॥

—o—

६ श्रीश्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्यां

## श्रीस्तवः ।

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे ।
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन् हरिः । यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥ १ ॥ हे श्रीर्देवि ! समस्तलोकजननीं त्वां स्तोतुमीहामहे युक्तां भावय भारतीं प्रगुणय प्रेमप्रधानां धियम् । भक्तिं भन्दय नन्दयाश्रितमिमं दासं जनं तावके लक्ष्यं लक्ष्मि ! कटाक्षवीचिविसृतेस्ते स्याम चामी वयम् ॥ २ ॥ स्तोत्रंनाम किमामनन्ति कवयो यद्यन्यदीयान्गुणानन्यत्र त्वसतोऽधिरोप्य फणितिस्सा तर्हि वन्ध्या त्वयि । सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयु कथं तादृशी वाग्वाचस्पतिनापि शक्यरचना त्वत्सद्गुणार्णोनिधौ ॥ ३ ॥ ये वाचां मनसां च दुर्ग्रहतया ख्याता गुणास्तावकास्तानेव प्रति साम्बुजिह्वमुदिता हे ! मामिका भारती । हास्यं तत्तु न मन्महे न हि चकोरैकाऽखिलां चन्द्रिकां नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि ॥ ४ ॥ क्षोदीयानपि दुष्टबुद्धिरपि निस्स्नेहोऽप्यनीहोऽपि ते कीर्तिं देवि ! लिहन्नहं न च बिभेम्यज्ञो न जिह्रेमि च । दुष्येत्सा

तु न तावता न हि शुना लीढापि भागीरथी दुष्येच्छ्वाऽपि न लज्जते न च निभेत्यातिंस्तु शाम्येच्छुनः ॥ ५ ॥ ऐश्वर्यं महदेव वाऽल्पमथवा दृश्येत पुंसां हि यच्चलक्ष्म्यास्समुदीक्षणात्तव यतस्सार्वत्रिकं वर्तते । तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणो धन्यं मन्यत ईक्षणात्तव यतस्त्वात्मानमात्मेश्वरः ॥ ६ ॥ ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययोः रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते । तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा देवि ! प्रथामश्नुते ॥ ७ ॥ देवि ! त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोस्सर्वज्ञता हीयते । यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमाम्भोजमिदन्तया किल विदन् भ्रान्तोऽयमित्युच्यते ॥ ८ ॥ लोके वनस्पतिबृहस्पतितारतम्यं यस्याः प्रसादपरिणाममुदाहरन्ति । सा भारती भगवती तु यदीयदासी तां देवदेवमहिषीं श्रियमाश्रयामः ॥ ९ ॥ यस्याः कटाक्षमृदुवीक्षणदीक्षणेन सद्यस्समुल्लसितपल्लवमुल्ललास । विश्वं विपर्ययसमुत्थविपर्ययं प्राक् तां देवदेवमहिषीं श्रियमाश्रयामः ॥ १० ॥ यस्याः कटाक्षवीक्षाक्षणलक्षं लक्षिता महेशास्स्युः । श्रीमद्धराजराजविषी सा मामपि वीक्षतां लक्ष्मीः ॥ ११ ॥

अर्वाञ्चो यत्पदसरसिजद्वन्द्वमाश्रित्य पूर्वे
मूर्ध्ना यस्यान्वयमुपगता देशिका मुक्तिमापुः ।
सोऽयं रामानुजमुनिरपि स्वीयमुक्तिं करस्थां
यत्संबन्धादमनुत कथं वर्ण्यते कूरनाथः ॥

पञ्चस्तव्यां श्रीस्तवस्समाप्तः

॥ पञ्चस्तवी च समाप्ता ॥

### श्रीपराशरभट्टार्यैरनुगृहीते

## श्रीरंगराजस्तवे पूर्वशतकम् ।

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतश्श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे । यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥ १ ॥ रामानुजपदच्छाया गोविन्दाह्वाऽनपायिनी । तदायत्तस्वरूपा सा जीयान्मद्विश्रमस्थली ॥ २ ॥ रामानुजमुनिर्जीयाद्यो हरेर्भक्तियन्त्रणात् । कलिकोलाहलक्रीडाक्षुधाग्रहमपाहरत् ॥ ३ ॥ विधाय वैदिकं मार्गमकौतुस्कुतकण्टकम् । नेतारं भगवद्भक्तेर्यामुनं मनवामहै ॥ ४ ॥ नौमि नाथमुनिं नाम जीमूतं भक्त्यवग्रहे । वैराग्यभगवत्तत्त्वज्ञानभक्त्यभिवर्षुकम् ॥ ५ ॥ ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम् । सहस्रशाखां योऽद्राक्षीद्द्राविडीं ब्रह्मसंहिताम् ॥ ६ ॥ नमः श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः । ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत् ॥ ७ ॥ श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये । चिन्तामणिमिवोद्वान्तमुत्सङ्गेऽनन्तभोगिनः ॥ ८ ॥ अस्ति वस्त्विदमित्थन्त्वप्रसंख्यानपराङ्मुखम् । श्रीमत्यायतने लक्ष्मीपदलाक्षैकलक्षणम् ॥ ९ ॥ लक्ष्मीकल्पलतोत्तुङ्गस्तनस्तबकचञ्चलः । श्रीरङ्गराजभृङ्गो मे रमतां मानसाम्बुजे ॥ १० ॥ स्वस्ति श्रीस्तनकस्तूरीमकरीमुद्रितोरसः । श्रीरङ्गराजाच्छरदश्शतमाशास्महेतराम् ॥ ११ ॥ पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः ॥ १२ ॥ अमतं मतं मतमथामतं स्तुतं परिनिन्दितं भवति निन्दितं स्तुतम् । इति रङ्गराजमुदजूघुषत्त्रयी स्तुमहे वयं किमिति तत्र शक्नुमः ॥ १३ ॥ यदि मे सहस्रवदनादिवैभवं निजमर्पयेत्स किल रङ्गचन्द्रमाः । अथ

शेषवन्मम च तद्वदेव वा स्तुतिशक्त्यभावविभवेऽपि भागिता॥१४॥
सो अङ्ग ! वेद यदि वा न किलेति वेदस्सन्देग्ध्यनर्घविदमात्मनि
रङ्गनाथम् । स्थाने यदेष खलु दोषमलीमसाभिर्मद्वाग्भिरैशमतिगा
यनमावृणोति ॥ १५ ॥ स्वं संस्कृतद्राविडवेदसूक्तैर्मान्त्वं मदुक्तैर्म
लिनीकरोति । श्रीरङ्गरुद्रः कलभः क एव स्नात्वापि धूळीरसिकं निषे
द्धा ॥ १६ ॥ किन्तु प्रपत्तिबलतारितविष्णुमायमद्वंद्वयराजकुलदुर्ल
लितं किलैवम् । श्रीरङ्गराजकमलापदलालितत्वं यद्वाऽपराध्यति मम
स्तुतिसाहसेऽस्मिन् ॥ १७ ॥ नाथस्य च स्वमहिमार्णवपारदृश्वाविज्ञानरागिलसितं सहते न वेदः । आर्षेक्षिकं यदि तदस्ति ममापि
तेन श्रीरङ्गिणस्स्तुतिविधावहमप्यकार्षम् ॥ १८ ॥ अन्यत्रातद्गुणोक्तिर्भगवति न तदुत्कर्षचौर्यैः परेषां स्तुत्यत्वाद्यावदर्था फणितिरपि तथा तस्य निस्सीमकत्वात् । आम्नायानामसीम्नामपि हरिविभवे वर्षबिन्दोरिवाब्धौ सम्बन्धास्स्वात्मलाभो न तु कबलनतः
स्तोतुरेवं न किं मे ॥ १९ ॥ कावेरीमवगाहिषीय भगवद्भोगान्तरायीभवत्कर्मक्लेशफलाशयप्रशमनोद्वेलामलस्रोतसम् ।
जन्तोस्संसरतोऽर्चिरादिसरणिव्यासङ्गभङ्गाय या लोकेऽस्मिन्
विरजेव वेल्लितजला श्रीरङ्गमालिङ्गति ॥ २० ॥ दुग्धाब्धिर्जनको जनन्यहमियं श्रीरेव पुत्री वरश्श्रीरङ्गेश्वर एतदर्हमिह
किं कुर्यामितीवाकुला । चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करान् कावेरी लहरीकरैर्विदधती पर्येति सा सेव्यताम् ॥ २१ ॥
तीर्थं शुन्धति पाति नन्दनतरून् रथ्याङ्गणान्युक्षति स्नानीयार्हणपानवारि वहति स्नातः पुनीते जनान् । श्यामं वेदरहो व्यनक्ति पुलिने फेनैर्हसन्तीव तद्गङ्गा विष्णुपदीत्वमात्रमुखरां हेमापगा इन्त्वयम् ॥ २२ ॥ अगणितगुणावद्यं सर्वं स्थिरत्रसमप्रतिक्रियमपि
पयःपूरैराप्याययन्त्यनुजाग्रती । प्रवहति जगद्धात्री भूत्वेव रङ्गपतेर्दया शिशिरमधुराऽगाधा सा नः पुनातु मरुद्वृधा ॥ २३ ॥

तरलतनुतरङ्गैर्मन्दमान्दोल्यमानस्वतटविटपिराजीमञ्जरीसुप्तभृङ्गा । क्षिपतु कनकनाम्नी निम्नगा नारिकेलक्रमुकजमकरन्दैर्मांसलापा मदंहः ॥ २४ ॥ कदलवकुलजम्बूपूगमाकन्दकण्ठद्वयससरसनीरामन्तरा सं-ह्यकन्याम् । प्रचलजलपिपासालम्बमानाम्बुदाभप्रमकरतरुवृन्दं वन्द्ये-तामन्तरीपम् ॥ २५ ॥ यद्विष्णोः पदमतमः परोरजोऽग्र्यं मुक्ता-नामनुविरजं विदीग्रमाहुः । तत्पुण्यं पुलिनमिदन्तयाद्य मध्येकावेरि स्फुरति तदीक्षिषीय नित्यम् ॥ २६ ॥ अत्यन्तप्रहतिमतीषु वैष्णवानां प्राप्यासु प्रचुरमयश्रमापहासु । कावेरीपरिचरितासु पावनीषु श्री-रङ्गोपवनतटीषु वर्तिषीय ॥ २७ ॥ स्फुरितशफरदीर्घनालिकेरीगु-लुच्छप्रसृमरमधुकुल्यावर्धितानोकहानि । रतिमविरति रङ्गारामरम्य-स्थलानि क्रमुकपनसमोचानेचकानि क्रियासुः ॥ २८ ॥ अधिपरम-पदं पुरीमयोध्याममृतवृतामपराजितामुशन्ति । पुलिनमुपरि रङ्गरा-जधानी पिहितदशामपि सा पुरश्चकास्ति ॥ २९ ॥ भवपदमपि दिव्यधाम कर्तुं तदुभयतन्त्रितहर्म्यमालिकेव । भवनमणितलैर्विजृ-म्भमाणा जयतितरामिह रङ्गराजधानी ॥ ३० ॥ मणिमकररुचीर्वि-तत्य पाशान् विसृमरकेतुकरैर्मृगं हिमांशोः । श्रिय इव नवकेलये जि-घृक्षुस्सुखयतु रङ्गपुरी चकासती नः ॥ ३१ ॥ जनपदसरिदन्तरी-पशुम्यत्पुरपरिपालननित्यजागरूकान् । ग्रहरणपरिवारवाहनाढ्यान् कुमुदमुखान् गणनायकान् नमामि ॥ ३२ ॥ अहृतसहजदास्या स्सूरयस्स्रस्तबन्धा विमलचरमदेहा इत्यमी रङ्गधाम । महितमनुज-तिर्यक्स्थावरत्वाश्रयन्ते सुनियतमिति ह स्म प्राहुरेभ्यो नमः स्तात् ॥ ३३ ॥ श्रीरङ्गदिव्यभवनं भुवि गोपुराणां प्राकारितेन निकरेण गरुत्मतेव । पार्श्वप्रसारितपतत्रपुटेन भक्त्या नानातनुं मिरुपगूढमुप-श्रयामः ॥ ३४ ॥ प्राकारमध्याजिरमण्टपोक्त्या सद्वीपरत्नाकररत्न-शैला । सर्वंसहा रङ्गविमानसेवां प्राप्तेव उन्मन्दिरमाविरस्ति ॥३५॥ जितबाह्यजिनादिमणिप्रतिमा अपि वैदिकयन्ति रङ्गपुरे । मणि-

मण्टपवमगणान् विदधे परकालकविः प्रणमेमहि तान् ॥ ३६ ॥
स्मेराननाक्षिकमलैर्नमतः पुनानान् दंष्ट्रागदाभ्रुकुटिभिर्द्विषतो धुना-
नान्। चण्डप्रचण्डमुखतः प्रणमामि रङ्गद्वारावलीषु चतसृष्वधि-
कारभाजः ॥ ३७ ॥ सर्वात्मसाधारणनाथगोष्ठीपूरेऽपि दुष्पूरमहा-
वकाशम्। आस्थानमानन्दमयं सहस्रस्थूणादिनाऽऽज्ञातमवाप्नवानि
॥ ३८ ॥ विहरति हरौ लक्ष्म्या लीलातत्रपरिष्क्रिया विनिमय-
विधासूनासूनिक्रियासफलोत्पलाम्। अथ मुनिमनःपद्मेष्वब्जास-
हायविहारजश्रमहरतटीं यामस्तामैन्दवीमरविन्दिनीम् ॥ ३९ ॥ ता-
पत्रयीमैन्दवपुष्करिण्यां निमज्ज्य निर्वापयिताऽस्मि यस्याः। अ-
भ्यासतोऽपामघमर्षणीनां चन्द्रस्मुखादीधितितामवाप ॥ ४० ॥पूर्वेण
तां तद्वदुदारनिम्नप्रसन्नशीताशयममनाथाः। पराङ्कुशाद्याः प्रथमे
पुमांसो निषेदिवांसो दश मां दयेरन् ॥ ४१ ॥ आधारशक्तिमुपरि
प्रकृतिं परेण तां कूर्ममत्र फणिनं पृथिवीं फणासु। पृथ्व्यां पयोधि-
मधितत्सलिलं निधाय श्रीरङ्गधाम मुनिचिह्नमभिष्टवानि ॥ ४२ ॥
परेण नाकं पुरि हेममय्यां यो ब्रह्मकोशोऽस्त्यपराजिताख्यः। श्री-
रङ्गनाम्नः तमपौरुषेयं विमानराजं भुवि भावयानि ॥ ४३ ॥ अनाद्या-
म्नातत्वात्पुरुषरचनादोषरहितं जने तांस्तान् कामान् विदधदपि सा-
युज्यहृदयम्। असन्देहाध्यासं भगवदुपलम्भस्थलममी प्रतीमः श्रीरङ्गं
श्रुतिशतसमानर्द्धि शरणम् ॥ ४४ ॥ अपि फणिपतिभावाच्छुभ्रम-
न्तश्शयालोर्मरकतसुकुमारैः रङ्गभर्तुर्मयूखैः। मकरजलधिपानश्याम-
जीमूतजैत्रं पुलकयति विमानं पावनं लोचने नः ॥ ४५ ॥ व्यापि
रूपमपि गोष्पदयित्वा भक्तवत्सलतयोज्झितवेलम्। तद्द्विपन्वपत्र-
केसरिरूपं गोपुरोपरि निजृम्भितमीडे ॥ ४६ ॥ अहमलमचलम्ब-
स्सीदतामित्यजस्रं निजमदुपरिभागे गोपुरं रङ्गधाम्नः। क्वचन नृपरि-
पाटीनासिवं क्वापि सिंहक्रमसुरभितमेकं ज्योतिरग्रे चकास्ति ॥४७॥
संशोध्य पावनमनोहरदृष्टिपातैर्देवाय मामपि निवेदयतां गुरूणाम्।

मन्योचरे भगवतोऽस्य कटाक्षवीक्षापङ्क्तिं प्रपद्य परितः परितो भयेयम् ॥ ४८ ॥ श्रीरङ्गराजकरनिभितशाखिकाभ्यो लक्ष्म्या स्वहस्तकलितश्रवणावतंसम् । पुन्नागतल्लजमजस्रसहस्रगीतिसेकोत्थदिव्यनिजसौरभमामनामः ॥४९॥ श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं विन्यस्य विश्वचिदचित्त्वयनाधिकारम् । यो निर्वहत्यनिशमङ्गुलिमुद्रयैव सेनान्यमन्यविमुखास्तमशिश्रियाम ॥ ५० ॥ सैन्यधुरीणप्राणसहायां सूत्रवतीमाशिश्रियमम्बाम् । श्रीपदलाक्षालाञ्छितसेवाप्रोतलसद्दोर्वेल्लिविलासाम् ॥ ५१ ॥ विदधतु सुखं विष्वक्सेनस्य ते प्रथमे भटाः करिमुखजयत्सेनौ कालाह्वसिंहमुखौ च नः । जगति भजतां तत्प्रत्यूहतूलदवानलाः दिशिदिशि दिवारात्रं श्रीरङ्गपालनकर्मठाः ॥५२॥ श्रुतिमयमतिहर्षप्रश्रयस्मेरवक्त्रं मणिमुकुरमिवाग्रे मङ्गलं रङ्गधाम्नः । शरणमभिगताः स्मो यत्र रूपस्वरूपस्वगुणमहिमदर्शी मोदते रङ्गशायी ॥५३॥ तार्क्ष्यपक्षतिवदस्य वल्लभां रुद्रया सह सुकीर्तिमर्चये । हर्षबाष्पमपि कीर्तिमर्थिनां यन्मुखेन कमला कटाक्षयेत् ॥५४॥ स्वास्वरूपस्फुरन्मौक्तिमा शब्द इत्युद्गुणानान् सुरांस्तर्जनीमुद्रयानाथनिद्रोचितोभिद्रवप्रेक्षणां सञ्चरन्तीं स्तुमस्तां च पञ्चायुधीम् ॥५५॥ अस्त्रग्रामाग्रेसरं नाथवीक्षावीथीधुर्यावेद्गलनृत्याभिरामम् । चक्रं दैत्यच्छेदकल्माषिताङ्गं भ्राम्यज्ज्वालामालमारि प्रपद्ये ॥५६॥ हनुमद्विभीषणयोः स्वां यतमाविह मोक्षमुपेक्ष्य । रघुनायकनिष्क्रियभूतं भुवि रङ्गधनं रमयेते ॥ ५७ ॥ इतो बहिः पञ्च पराञ्चि खानि प्रत्यञ्चि तानि स्युरितोऽन्तरित्थम् । औपाधिकेभ्यो निरुपाधिभोग्ये प्रत्याहरद्वैत्रवरं प्रजामि ॥ ५८ ॥ शेषशयलोचनामृतनदीरयाकुलितलोलमानानाम् । आलम्बमिवामोदस्तम्भद्वयमन्तरङ्गमभियामः ॥ ५९ ॥ श्रीरङ्गान्तर्मन्दिरं दीपशेषं श्रीभूमीवद्रम्यजामातृगर्भम् । पश्येम श्रीदिव्यमाणिक्यभूषामञ्जूषायास्तुल्यमुन्मीलितायाः ॥६०॥ लीलालताकृपाणीचञ्चरपत्तद्ग्रहार्पितकराग्राः । प्रोतावतंसितकुचाः

पदाब्जसंवाहिनीरियं स्तुमहे ॥ ६१ ॥ मुकुलितनलिनास्तकौमुदीका इव सुनिशा विमलादिका नवापि । शिरसिकृतनमस्यदेकहस्ता इतरकरोचलचामराः श्रयेयम् ॥ ६२ ॥ उत्फुल्लपङ्कजतटाकमिवोपयानि श्रीरङ्गराजमिह दक्षिणसव्यसीम्नोः । लक्ष्मीं विहाररसिकामिव राजहंसीं छायामिवाभ्युदयिनीमवनीं च तस्याः ॥ ६३ ॥ पिब नयन ! पुरस्ते रङ्गधुर्याभिधानं स्थितमिव परिफुल्लत्पुण्डरीकं तटाकम् । श्रियमपि विहरन्तीं राजहंसीमिवास्मिन् प्रतिफलनमिवास्याः पश्य विश्वंभरां च ॥ ६४ ॥ सौशील्यशीतलमवेलकृपातरङ्गसंप्लावितारिवलमकृत्रिमभूम निम्नम् । लक्ष्म्या च चाभितमगुरु विगाहमानाः श्रीरङ्गराजमिपपयसरः प्रसभम् ॥ ६५ ॥ सिंहासने कमलया क्षमया च विश्वगेकातपत्रयितुमस्वदसन्निषण्णम् । लक्ष्मीस्वयंवरमनाथिवर्यौवनश्रीसौन्दर्यसम्पदवलिप्तमिवालिहीय ॥ ६६ ॥ आपादमूलमणिमौलि मम्मुलगन्त्या स्वातन्त्र्यसौहृदतरङ्गितयाङ्गभक्त्या । सर्व्यं समस्तजनचेतसि सन्दधानं श्रीरङ्गराजमनिमेषगनुस्मिपाम्ब ॥ ६७ ॥ क्षितिकमलनिवासाकल्पवल्लीमल्लीलोल्लुठनदशदिशोषधीघनारम्भजृम्भः । श्रममपहरतां मे रङ्गधामेति नाथाद्भुरमयफलनम्रः पक्वलः पारिजातः ॥ ६८ ॥ संभाषमाणमिव सर्वरसं वदेन मन्दस्मितेन मधुरेण च वीक्षणेन । दिव्यायुधप्रतिपतचतुर्भुजमत्युदारं रङ्गास्पदं मम शुभाश्रयमाश्रयाणि ॥ ६९ ॥ एते शङ्खगदासुदर्शनभृतः क्षेमङ्करा बाहवः पादद्वन्द्वमिदं शरण्यमभयं भद्रं च वो हे जनाः ! । इत्युत्पुष्यमयङ्करे करतले स्मेरेण वक्त्रेण च दुर्व्याचक्षिन निर्दहेन्मम धुरं श्रीरङ्गसोमहः ॥ ७० ॥ अभ्रंलिहंप्रथिमिकाचरितान्मदानिरामोदमाननवर्यौवनसारस्लेपैः । हे । पारिजातमिव नूतनतायमानमागारागतं कथमपीमहि रङ्गधुर्यम् ॥ ७१ ॥ आलोक्य हृदयाल्पो स्मरशार्दीमानमीपदस्मितं प्रस्फुटाधानि वचांसि पद्मनिलयाचेतसनन्यं वपुः । चक्षुष्मन्ति मनाग्मनान्ति न इमे श्री-

रङ्गशृङ्गार! ते भावा यौवनगन्धिनः किमपरं सिञ्चन्ति चेतांसि नः॥ ७२॥ आयत्किरीटमलिकोल्लसदूर्ध्वपुण्ड्रमाकर्णलोचनमनङ्कुशकर्णपाशम्। उत्फुल्लवक्षसमुदायुधबाहुमर्हन्नीवि च रङ्गपतिमब्जपदं भजामः॥ ७३॥ अब्जन्यस्तपदाब्जमञ्चितकटीसंवादिकौशेयकं किञ्चित्ताण्डवगन्धिसंहननकं निर्व्याजमन्दस्मितम्। चूडाचुम्बिमुराम्बुजं निजभुजाविश्रान्तदिव्यायुधं श्रीरङ्गे शरदश्शतं तत इतः पश्येम लक्ष्मीसखम्॥ ७४॥ अग्रे तार्क्ष्येण पश्चादहिपतिशयनेनात्मना पार्श्वयोश्च श्रीभूमिभ्यामतृप्त्या नयनचुलकनैस्सेव्यमानामृतौघम्। वक्त्रेणाविःस्मितेन स्फुरदभयगदाशङ्खचक्रैर्भुजाग्रैर्विश्वस्मै तिष्ठमानं शरणमशरणा रङ्गराजं भजामः॥ ७५॥ आर्ताप्राश्रयमर्थिकल्पकमसद्धागस्करक्ष्मातलं सद्यस्संश्रितकामधेनुभभियत्सर्वस्वमस्मद्धनम्। श्रीरङ्गेश्वरमाश्रयेम कमलाचक्षुर्महीजीवितं श्रीरङ्गे स सुखाकरोतु सुचिरं दास्यं च धत्तां मयि॥ ७६॥ सफणवितानदीप्रमणिमालिसुदामरुचिप्रदिमसुगन्धिभोगसुखशायितरङ्गधनम्। मदभरमन्थरोच्छ्वसितनिःश्वसितोत्तरलं फणिपतिडोलिकातलिममाश्वसिमः प्रणताः॥ ७७॥ वटदलदेवकीजठरवेदशिरःकमलास्तनशठकोपवाग्वपुषि रङ्गगृहे शयितम्। वरदमुदारदीर्घभुजलोचनसंहननं पुरुषमुपासिषीय परमं प्रणतार्तिहरम्॥ ७८॥ उदधिपरमव्योम्नोर्विस्मृत्य पद्मवनालयाविनिमयमयीं निद्रां श्रीरङ्गनामनि धामनि। फणिपरिवृढस्फारश्वासनिःश्वसितक्रमस्खलितनयनं तन्वन् मन्वीत नः परमः पुमान्॥ ७९॥ जलधिमिव निपीतं नीरदेनाद्रिमध्ये निहितमिव शयानं कुञ्जरं वाऽद्रिकुञ्जे। कमलपदकराक्षं मेचकं धाम्नि नीले फणिनमधिशयानं पूरुषं वन्दिषीय॥ ८०॥ श्रीरङ्गेशय इह शर्म निर्मिमीतामाताम्राधरपदपाणिविद्रुमो नः। कावेरीलहरिकरोपलाल्यमानो गम्भीराद्भुत इव तर्णकोऽर्णवस्य॥ ८१॥ सिञ्चेदिमं च जनमिन्दिरया तटित्वान्

भूपामणिद्युतिभिरिन्द्रधनुर्दधानः । श्रीरङ्गधामनि दयारसनिर्भरत्वाद्द्रौ शयालुरिव जीवतु कालमेघः ॥८२॥ आमौलिरत्नमङ्गरपुनराच पङ्क्त्यां धामक्रमेदमदुदारजनोहृदाङ्कम् । श्रीरङ्गशेषशयनं नयनैः पिबामः पश्यन्मनःश्रवणमोघमिवामृतस्य ॥ ८३ ॥ अरविन्दितमघिपाणिवक्त्रैरपि तापिञ्छितमञ्जिनाङ्गकान्त्या । अधरेण च चन्द्रजीविते श्रीः नियतं नन्दनवेत रङ्गचन्द्रम् ॥ ८४ ॥ अन्योन्यरङ्गरुचोऽनुपानशोभाः दिव्यस्रगम्बरपरिष्करणाङ्गरागाः । संसर्गतः पुलकिता इव विन्ध्यपरगाद्रङ्गेन्दुकान्तिमधिरूढमुपबृंहयन्ति ॥ ८५ ॥ ध्रुवकनकजगिरिपरिमिलदुदधिप्रचलितलहरिनिदहमहमिकया । स्नपयति जनमिनवपङ्कति तमः फणिराजमकरकतमणिकिरणगणः ॥ ८६ ॥ भोगीन्द्रतल्पे श्वसितमेरभवर्धितं श्रीनित्यानुषक्तपरमेश्वरभावगन्धि । सौरभ्यमाप्लुतदिशावधि रङ्गनेतुरानन्दसंपदि निमज्जयते मनांसि ॥ ८७ ॥ रङ्गभर्तुरपि लोचनचर्यां नाहसाव लिपु लेशपमानम् । पुण्यहास इति नाम दुहानं सौकुमार्यमतिना दधुनसं नः ॥ ८८ ॥ एककस्मिन्नरवयवेऽनन्तसौन्दर्यमग्नं सर्वं द्रष्टुं कथमिति मुधा मामथा नन्दचक्षुः ॥ रासं सांप्रज्ञप्रतिकरकरं रङ्गराजाङ्कितानां तद्वात्सल्यं परिणमयिता विश्वधारीणवृत्ति ॥ ८९ ॥ वपुर्मन्दारस्य प्रथमकुसुमोल्लाससमयः क्षमालक्ष्मीभृत्तीसकलकरणोन्मादनमधु । विकासस्सौन्दर्यस्रजि रसिकताशीकुलको युवत्वं रङ्गेन्दोस्सुरभयति नित्यं शुभगताम् ॥ ९० ॥ किरीटचूडारत्नराजिराधिराज्यजल्पिका । मुखेन्दुकान्तिरुन्मुखं तरङ्गितेव रङ्गिणः॥९१॥ शिखारत्नोदीर्णं किशिकिशि च माणिक्यमकरीलसच्चूडं रङ्गप्रभुमणिकिरीटं मनुमहे । समुचकृस्फीतं चिदचिदधिराज्याश्रिय इव प्रियाक्रीडं चूडामणिमपि रीतम्मं तमभिन ॥ ९२ ॥ विहरतु मयि रङ्गिणश्चूलिकाभ्रमरकतिलसोर्ध्वपुण्ड्रोज्ज्वलम् । सुरसमृततटाक चन्द्राम्बुजसपहरमुचिद्ययाघमन्दस्मितम् ॥ ९३ ॥ सुरसपुण्डरीकमुपरि

इह रङ्गभर्तुरभित्रिकण्टकं तिलकाश्च केसरसमासमौक्तिकाः । इह रङ्गभर्तुरभि-
न्मधुव्रतप्रकरश्रियं भ्रमरकाणि बिभ्रति ॥ ९४ ॥ हृदयं प्रसादयति
रङ्गपतेः मधुरोर्ध्वपुण्ड्रतिलकं ललितम् । अलिकार्धचन्द्रदलसंतति-
तामम्रुतस्तुतिं यदभिशङ्क्यते ॥ ९५ ॥ सरसीरुहे समवनाम्य मदा-
दुपरिप्रनृत्यदलिपंक्तिनिभे । स्फुरतो भ्रुवावुपरि लोचनयोः सवि-
लासलास्यगति रङ्गभृतः ॥ ९६ ॥ सरशरनलिनप्रभानेत्रयोः परि-
सरनमदिक्षुचापच्छवि । युगमुदयति रङ्गभर्तुर्भ्रुवोः गुरुकुलमिव शा-
ङ्गनृत्तश्रियः ॥ ९७ ॥ कृपया परया करिष्यमाणे सकलाङ्गं किल
सर्वतोऽक्षि नेत्रे । प्रथमं श्रवसी समास्तृणाते इति दैर्घ्येण विदन्ति
रङ्गनेतुः ॥ ९८ ॥ श्रोत्रोनासारोधाचदनधिकडोलायितगते विशाल-
स्फीतायद्रुचिरशिशिरातास्रधवले । मियोबद्धस्पर्धस्फुरितशफरद्वन्द्व-
ललिते क्रियास्तां श्रीरङ्गप्रणयिनयनाब्जे मयि दयाम् ॥ ९९ ॥
करुणामृतकूलमुद्वहैषा प्रणमत्स्वागतिकी प्रसन्नशीता । मयि रङ्ग-
धनोपकर्णिकाऽक्ष्णोः सरितोर्दीक्षणवीचिसन्ततिस्स्यात् ॥ १०० ॥
विलसति नासा कल्पकवल्ली मुग्धेव रङ्गनिलयस्य । सितम-
पि तन्नकुसुमं चुबुककपोलं च पल्लवोल्लसितम् ॥ १०१ ॥
नयनशफरविद्धौ कर्णपाशावरुद्धौ रुष इव लुठतोऽर्चिर्मञ्जरी-
हद्विरन्तौ । परिमिलदलकालीशैवलामंसवेलां अनुमणिमकरोद्वौ
रङ्गधुर्यामृताब्धेः ॥ १०२ ॥ अधरमधुराम्भोजं तत्कर्णपा
शमृणालिकावलयमभि मामास्तां रङ्गेन्दुवक्त्रसरश्श्रियम् । नयनश-
फरं नासाशैवालवल्लरिकर्णिकामकरमलकश्रेणीपर्यन्तनीलवनावलि-
॥ १०३ ॥ रमयतु स मां कण्ठः श्रीरङ्गनेतुरुदञ्चितक्रमुकतरुणग्री-
वाकम्बुप्रलम्बमलिम्लुचः । प्रणयविलगल्लक्ष्मीविश्वम्भराकरकन्दली-
कनकवलयक्रीडासंक्रान्तरेख इवोल्लसन् ॥ १०४ ॥ अधिष्ठानस्तम्भौ
भुवनपृथुगन्धस्य कमलाकरेणोरालाने अरिकरिघटोन्माथगुमलौ ।
फणीन्द्रस्फीतस्रग्व्यतिकरितसन्दिग्धविभवौ भुजौ मे भूपाल.मय ।

ममि रङ्गप्रणयिनः ॥ १०५ ॥ प्रतिजलधितो वेलाशय्यां विभीषण-कौतुकात् पुनरिव पुरस्कुर्वे श्रीरङ्गिणः फणिपुङ्गवे । समुपदधतः कश्चिरकश्चिरप्रसारयतो भुजद्वयमपि सदा दानश्रद्धालु दीर्घमुपास्महे ॥ १०६ ॥ कुसुमभरालसौ स्फटिकवेदिशयौ विटपामरतरोः पर परिहसत् पृथु रङ्गभुजः । रत्नमणिमुद्रिकाकनककङ्कणदोर्वलयः किस लयि दोर्द्वयं फणिनि निर्भरसुप्तमिमः ॥ १०७ ॥ मद्रक्षाव्रतकौतुके मुकटके विश्रान्तिकर्णेजपे शार्ङ्गज्याकिणकर्कशिम्नि सुमनस्तल्पमोहने मार्दवे । दोर्द्वन्द्वं पयुशः प्रलोम्य कमलालीलोपधानंभरन्त-चित्रालङ्कमुद्रितं विजयते श्रीरङ्गसंभङ्गिनः ॥ १०८ ॥ भवार्तानां यक्त्रामृतसरसि मार्गं दिशदिव स्वयं वक्त्रेणेदं वरदमिति सन्दर्शितमिव । कराम्भोजं पङ्करुहवनरुपा पाटलमिव श्रयामि श्रीरङ्गेश शयितुरुपधानीकृतमहम् ॥ १०९ ॥ किरीटं श्रीरङ्गेशयितुरुपधानी-कृतभुजः विधीशाधीशत्वाद्धरत इति संस्पृश्य वदति । निहीनानां मुख्यं शरणमिति, बाहुस्तदितरः स्फुटं ब्रूते पादाम्बुजयुगलमाजानु निहितः ॥ ११० ॥ मलयजशिलिसं मालतीदामतल्पं सुमणिसर-वितानं कौस्तुभमस्त्रिदीपम् । दनुजवृषपिपाणोल्लेखचित्रं च लक्ष्मीललितगृहमुपासे रङ्गसर्वसहोरः ॥ १११ ॥ हारस्फारितफेनमं शुलहरीमालर्द्धिमुक्ताफलश्रेणीशीकरदुर्दिनं तव इतो व्याकीर्णरत्नोत्करम् । आविःकौस्तुभलक्ष्मि रङ्गवसतेर्निस्सीमभूमाद्भुतं वक्षो मन्दरमथ्यमानजलधिश्रायं विलोकेमहि ॥ ११२ ॥ वक्षःस्थल्यां तुलसिकमलाकौस्तुभैर्वैजयन्ती सर्वेशत्वं कथयतितरां रङ्गधाम्नस्तदा-स्ताम् । कूर्मव्याघीनखपरिमिलतपञ्चहेती यशोदानद्धा मौग्ध्याभरणमधिकं नस्समाधिं धिनोति ॥ ११३ ॥ कियान् भरो मम जगदण्डमण्डलीत्यतृप्तितः कृशितमिवोदरं विभोः । रिरिक्षिषोचितजगतीपरम्परां परामिव प्रथयति नाभिपङ्कजम् ॥ ११४ ॥ त्रिविध चिदचिद्वृन्दं तुन्दावलम्बि वलित्रयं विगणयदिवैश्वर्यं व्याख्याति

रङ्गमहेशितुः । प्रणतवशता सूते दामोदरत्वकरः किणः तदुभय-
गुणाकृष्टं पद्मं किलोदरबन्धनम् ॥ ११५ ॥ त्रयो देवास्तुल्यास्त्रय-
मिदमद्वैतमधिकं त्रिकादस्मात्तत्त्वं परमिति वितर्कान् विघटयन् । वि-
भोर्नाभीपद्मो. विधिशिवनिदानं भगवतस्तदन्यद्भ्रूभङ्गीपरवदिति
सिद्धान्तयति नः ॥ ११६ ॥ गर्भे कृत्वा गोप्तुमनन्तं जगदन्त
र्मन्दद्भ्रम्या याञ्छति गाम्भ्यं ननु नाभिः । उदरिक्षप्येतत्प्रेक्षितुमुच-
रूनाभिभूयं नाभीपद्मो रंहति रङ्गायतनाम्भोः ॥ ११७ ॥ मदमिव
मधुकैटभस्य रम्भाकरमकरीन्द्रकराभिरूप्यदर्पम् । स्फुटमिव परि-
भूय गर्वगुर्वीः किमुपगिरीमहि रङ्गकुञ्जरोर्वोः ॥ ११८ ॥ कटी-
कान्तिसंवादिचातुर्यनीवीलसद्रत्नकाञ्चीकलापानुलेपम् । महाभ्र-
लिलक्षन्मेरुमाणिक्यसानूरिवाभाति पीताम्बरं रङ्गबन्धोः ॥ ११९ ॥
भर्मस्थलांशुपरिवेष शाम्बुराशेस्सन्ध्याम्बुवाहनिकुरुम्बमिवाम्बर-
स्य । शम्पाकदम्बकपिवाम्बुमुचो ममो नः पीताम्बरं पिबति रङ्ग-
धुरन्धरस्य ॥ १२० ॥ वैभूषण्या कान्तिराङ्गी निमग्ना विष्वग्धीची
क्वापि सोन्मादवृत्तिः । जाने जानुद्वन्द्ववार्ताविवर्तो जातः श्रीमद्र-
ङ्गतुङ्गालयस्य ॥१२१॥ श्रीरङ्गेशयजङ्घे श्रीभूम्यामर्शहर्षकण्ट-
किते । तत्केलिनलिननांसलनालद्वयललितमाचरतः ॥ १२२ ॥
वन्दारुवृन्दारकमौलिमालायुञ्जानचेतःकमलाकरेभ्यः । सङ्क्रान्त-
रागानिव पादपद्मो श्रीरङ्गभर्तुर्मनवे नवं च ॥ १२३ ॥ यद्वृन्दा-
वनपण्डितं दधिरवैर्यत्पाण्डवं शिक्षितं यल्लक्ष्मीकरसौख्यसाक्षि जल-
जप्रस्पर्धमानर्द्धि यत् । यच्चक्रोऽम्बुजलस्थलव्ज्ञमपि यद्दूत्यप्रसङ्गो-
... पदं वहतु नः श्रीरङ्गिणो मङ्गलम् ॥ १२४ ॥

प्र-
मुकैरस्तैस्तैश्च रेखामयः । ... सुन्दरम् ॥ १२५ ॥ पुनाति
... ण्डितं श्रीरङ्गेशयपादपङ्कजयुगं वन्दामहे सुन्दरम् ॥ १२५ ॥ पुनाति
भुवनान्यहं यदुपसीति सर्वाङ्गुलीअलज्ज्वलितजाह्नवीलहरिवृन्द-

सन्देहदाः । दिवो निशि च रक्षिणश्चरणचारुकल्पद्रुमप्रवालनवमञ्जरीः नररुचीर्विगाहेमहि ॥ १२६ ॥ श्रीरङ्गेन्दोः पदकमलये नीलमञ्जीरभैक्ष्या वन्दे मुक्ताप्रणयिमधुपव्रातराजीवजैत्रे । नित्याभ्यर्चीनतानिधिगुरुस्तोमसंग्रथ्यमानैः हेमाम्भोजैर्निबिडनिकटे रामसीतोपनीतैः ॥ १२७ ॥

श्रीरङ्गराजस्तवे पूर्वशतकं समाप्तम् ।

---

श्रीपराशरभट्टार्यैरनुगृहीते

## श्रीरंगराजस्तवे उत्तरशतकम् ।

——(०)——

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतश्श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

हर्तुं तमस्सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति । तेनावलोक्य कृतिनः परिभुञ्जते तं तत्रैव केऽपि चपलाश्शलभीभवन्ति ॥ १ ॥ या वेदबाह्याः स्मृतयोऽर्हदादेर्वेदेषु याः काश्च कुदृष्टयस्ताः । आगस्कृतां रङ्गनिधे ! त्वदध्यन्यन्धङ्करण्यः स्मृतवान् मनुस्तत् ॥ २ ॥ प्रत्यक्षपगमथनपरपतोहरत्नाश्रितैर्दोषप्रतिविमतेश्च वादवर्त्म । दुस्तर्कप्रभवतया च वक्तृदोषस्पृष्टया न प्रजहति रङ्गचन्द्र ! वृद्धाः ॥ ३ ॥ अन्यथितयेदङ्कुर्याणैरदृष्टकरणैर्वपुर्निरवयवकोऽङ्कुरार्तैः पुमान् करणातिगः । स्फुरति हि जनाः प्रत्यासत्तेरिमौ न निश्चिनुते तदधिकृतां शास्त्रं रमेश ! ते परलोकिनि ॥ ४ ॥ प्रत्यक्षा श्रुतिरर्थवीश्च न तथा दोपस्तदर्थः पुनः धर्माधर्मपरावरेश्वरमुखः प्रत्यक्षवाध्यो न च । तत्राकृतनतेऽपि रङ्गरमण ! प्रत्यक्षवत् सा प्रमा योगोन्मीलितधीस्तदर्थमथवा प्रत्यक्षमीक्षेत सः ॥ ५ ॥ न शदराङ्मयं वा नोभयस्माद्बहिर्वा जग

दिति न किलैकां कोटिमाटीकते तत्। इति निरुपधि सर्वसर्वि-
कातो निषेधन् वरद! सुगतपाशथोरलावे विलाव्यः ॥ ६ ॥
प्रतीतिश्चेदिष्टा न निखिलनिषेधो यदि न को निषेद्धाऽनो नेष्टो नि-
रुपधिनिषेधस्तदुपधौ। निषेधेऽन्यत्सिध्येत् वरद! घटशङ्के शशश्र-
वत् प्रमाशून्ये पथे श्रुतिरपि मतेऽस्मिन्विजयताम् ॥ ७ ॥ योगा-
चारो जगदपलपत्यत्र सौत्रान्तिकस्तद्वैचित्र्यादनुमितिपदं चक्ति
वैभाषिकस्तु। प्रत्यक्षं तत्क्षणिकयति ते रङ्गनाथ! त्रयोऽपि ज्ञा-
नात्मत्वक्षणभिदुरते चक्षते वान् क्षिपामः ॥ ८ ॥ जगद्भङ्गुरं
भङ्गुरा बुद्धिरात्मेत्यसद्धेतुभावे तथा वेद्यविरोः। क्षणध्वंसतश्च
स्मृतिप्रत्यभिज्ञादरिद्रं जगत्स्यादिदं रङ्गचन्द्र! ॥ ९ ॥ अहमिद-
मभिवेद्मीत्यात्मविद्योर्विभेदे स्फुरति यदि अद्वैक्यं वाद्यमप्येकम-
स्तु। प्रमितिरपि मृषा स्यान्मेयमिथ्यात्ववादे यदि तदपि सहे-
रन् दीर्घमसन्मतायुः ॥ १० ॥ एतद्ग्रामाक्षं दलयतु कलिब्रह्ममी-
मांसकांश्च ज्ञप्तिर्ब्रह्मैतज्ज्वलदपि निजाविद्यया यन्भ्रमीति। तस्य भ्रा-
न्तिं तां श्लथयति जिताद्वैतविद्यस्तु जीवो यद्यद् दृश्यं तद्वितथमिति
ये ज्ञापयांचक्रुरज्ञाः ॥ ११ ॥ अङ्गीकृत्य तु सप्तभङ्गिकुसृतिं स्या-
दस्तिनास्त्यात्मिकां विश्वं त्वद्विभवं जगज्जिनमते नैकान्तमाच-
क्षते। भिन्नाभिन्नमिदं तथा जगदुपे वन्ध्या ममाम्बेतिवन्नूनमग्रा-
विदे रहः परमिदं रङ्गेन्द्र! ते चक्षताम् ॥ १२ ॥ कणचरचरणाक्षौ
भिक्षमाणौ कुतर्कैः श्रुतिशिरसि सुभिक्षं त्वज्जगत्कारणत्वम्। अणुपु
विपरिणाम्य व्योमपूर्वं च कार्यं तव भवदनपेक्षं रङ्गभर्तर्दुवाते
॥ १३ ॥ वेदे कर्त्राद्यभावाद्बलवति हि नयैस्त्वन्मुखे नीयमाने त-
न्मूलत्वेन मानं तदितरदखिलं जायते रङ्गधामन्! । तस्मात्सांख्यं
सयोगं सपशुपतिमतं कुत्रचित्पञ्चरात्रं सर्वत्रैव प्रमाणं तदिदमवगतं
पञ्चमादेव वेदात् ॥ १४ ॥ सम्राष्टे नेश्वरं त्वां पुरुषपरिषदि न्यस्य
यद्वाऽऽन्यपर्यात् सांख्यो योगी च काका प्रतिफलनमिथैश्वर्यमचे

कयाचित् । मिश्रौ शैवस्सुराजम्भवमभिमनुते ; रङ्गराजातिरागाद्
त्वां त्वामेवाम्यथास्त्वं ननु परविभवव्यूहनाद्यम्भविष्णुम्॥ १५॥
इति मोहनवर्त्मना त्वयापि प्रथितं चाह्यमतं तृणाय मन्ये । अथ
वैदिकवर्मवर्मितानां भनिताहे कुदशां किमीश ! वर्त्म ॥ १६॥
संस्कारं प्रतिसञ्चरेषु निदधत्सर्गेषु तत्सारितं रूपं नाम च तत्तदर्ह-
निवहे व्याकृत्य रङ्गास्पद ! । सुप्तोद्बुद्धविरिञ्चपूर्वजनतामध्याप्य
तत्पद्धितं शासनस्पृतकर्तृकान् वहसि यद्वेदाः प्रमाणं ततः ॥ १७॥
शीक्षायां वर्णशिक्षा पदसमधिगमो व्याक्रियानिर्वचोभ्यां छन्दश्छ-
न्दश्चितौ साद्गमयति समयं ज्यौतिषं रङ्गनाथ ! । कल्पेऽनुष्ठानसूक्तं
ह्युचितगमितयोर्न्यायमीमांसयोस्स्यात् अर्थव्यक्तिः पुराणस्मृतिषु
तदनुगास्त्वां विचिन्वन्ति वेदाः ॥ १८ ॥ आदौ वेदाः प्रमाणं
स्मृतिरुपकुरुते सेतिहासैः पुराणैः न्यायैस्सार्धं त्वदर्चाविधिमुपरि
परिक्षीयते पूर्वभागः । ऊर्ध्वो भागस्त्वदीहागुणविभवपरिज्ञापनै-
स्त्वत्पदाप्तौ वेद्यो वेदैश्च सर्वैरहमिति भगवन् ! स्वेन च व्याच-
कर्थ ॥ १९ ॥ क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुरप्रसादो
या कर्तुः फलद इति रङ्गेश ! कुदशः । त्वदर्चेष्टापूर्ते फलमपि भव-
त्प्रीतिजमिति त्रयीवृद्धास्तत्तद्विधिरपि भवत्प्रेरणमिति ॥ २० ॥
आज्ञा ते सनिमित्तनित्यविषयः स्वर्गादिकाम्यश्विधिः सोऽनुज्ञा शठ-
चित्तशात्रवशतोपायोऽभिचारश्रुतिः । सर्वीयस्य समस्तशासितुरहो !
श्रीरङ्गसर्वस्व ! ते रक्षाऽऽकृतनिवेदिनी श्रुतिरसौ त्वच्चित्यशास्ति-
स्ततः ॥ २१ ॥ अत्रास्ते निधिरितिवत्पुमर्थभूते सिद्धार्था अपि गुण-
रूपवृत्तवादाः । रङ्गेश ! त्वयि सकलास्समन्वयन्ते नोपासाफलवि-
धिभिर्विशेष एषाम् ॥२२॥ देहो देहिनि कार्ये विकृतयो जातिर्गु-
णाः कर्म च द्रव्ये निष्ठितरूपबुद्धिवचनास्तात्स्थ्यात् तथेदं जगत्
विश्वं त्वय्यभिमन्यसे जगदिपे तेनाद्वितीयस्ततः मायोपाधिवि-
कारभङ्गरकथा का नाम रङ्गेश्वर ! ॥ २३ ॥ विश्वस्युत्पत्तिप्रवृत्तिप्र

सननियमनव्यापनैरात्मनस्ते शेषोऽशेषः प्रपञ्चो वपुरिति भवतस्त-
स चाभेदवादाः। सर्वं खल्वेतदात्म्यं सकलमिदमहं तत्त्वमस्येवमा-
द्याः व्याख्याता रङ्गधामप्रवण! विजयिभिर्वैदिकैस्सार्वभौमैः॥२४॥
सराजकमराजकं पुनरनेकराजं तथा ययाभिमतराजकं जगदिदं जज-
ल्पुर्जडाः। जगावयवशश्चित्रतातरतमत्वतर्काङ्किका श्रुतिश्चिदचिती
त्वया वरद! नित्यराजन्वती॥ २५ ॥ ब्रह्माद्यास्सृज्यवर्गे भ्रुकुटि-
भटतयोद्घाटिता नावतारप्रस्तावे तेन न त्वं न च तव, सदृशा वि-
श्वमेकातपत्रम्। लक्ष्मीनेत्रा त्वयेति श्रुतिमुनिवचनैस्त्वत्परैरर्पयामः
श्रीरङ्गाम्भोधिचन्द्रोदय! जलमुचितं वादिकौतस्कुतेभ्यः॥ २६ ॥
दोषोपधावधिसमातिशयानसंख्यानिर्लेपमङ्गलगुणौघदुघाष्षडेताः।
ज्ञानैश्वरीशकनवीर्यबलार्चिषस्त्वां रङ्गेश! भास इव रत्नमनर्घयन्ति
॥ २७ ॥ युगपदनिशमक्षैः स्वैः स्वतो वाऽक्षकार्ये नियममनियमं
वा प्राप्य रङ्गाधिराज!। करतलवदशेषं पश्यसि स्वप्रकाशं तदवरण-
ममोघं ज्ञानमाम्नासिषुस्ते॥ २८ ॥ नयनश्रवणो दृशा मृणोपि अथ
ते रङ्गपते! महेशितुः। करणैरपि कामकारिणः घटते सार्वपथीन-
मीक्षणम्॥ २९ ॥ सार्वज्ञेनाज्ञमूलं जगदभिदधतो वारितास्साक्षि-
मात्रात् सांख्योक्तात्कारणं त्वां पश्यति भगवन्नैश्वरी रङ्गशायिन्!।
अप्रयोऽन्यैः स्वतन्त्रोऽप्रतिहति सदसत्कर्मवैश्या विचित्रं यत्रेच्छा
लेशतस्त्वं युगपदगणयन् विश्वमाविश्वकर्थ ॥ ३० ॥ कार्येऽनन्ते
स्वतनुभुवतस्त्वामुपादानमाहुः सा ते शक्तिस्सुकरमितरच्चेति वेलां
विलंघ्य। इच्छा यात्रद्विहरति सदा रङ्गराजानपेक्षा सैवेशानादति-
शयकरी सोर्णनाभौ विभाव्या ॥ ३१ ॥ स्वमहिमस्थितिरीश!
भूशक्रियोऽप्यकलितश्रम एव बिभर्षि यत्। वपुरिव स्वमशेषमिदं
बलं तव पराश्रितकारणवारणम्॥ ३२ ॥ मृगनाभिगन्ध इव यत्स-
कलार्थान् निजसन्निधेरविकृतो विकृणोषि। प्रियरङ्ग! वीर्यमिति तत्तु
वदन्ते सविकारकारणमितो विनिवार्यम्॥ ३३ ॥ सहकार्यपेक्षमपि

ज्ञातुमिह रदनपेक्षकर्तृता। रङ्गघन! जयति तेज इति प्रणतार्ति-
जित् प्रतिभटाभिभावुकम्॥ ३४॥ मर्त्योत्थायं विरिञ्चावधिक-
मुपरि चोत्प्रेक्ष्य मीमांसमाना रङ्गेन्द्रानन्दवल्ली तत्र गुणनिवहं
यौवनानन्दपूर्वम्। न स्वार्थं स्प्रष्टुमीष्टे स्खलति पथि परं मूकलायं
निलिल्ये हन्तैरं त्वद्गुणानामवधिगमनयोः का कथा चित्तवाचोः
॥ ३५॥ त्वधायिषत ये गुणा निधिनिधायमारण्यकेष्वमी प्रदिम-
चातुरीप्रणतचापलक्षान्तयः। दयाविजयसौन्दरीप्रभृतयोऽपि रत्नौ-
घवत् जगदृष्य रहेतिक्षमा वरद! रङ्गरत्नापगे॥ ३६॥ यमाश्रि-
त्यैवात्मंभरय इव ते सद्गुणगणाः प्रथन्ते सोऽनन्तस्तवपावनशा-
न्तोदितदशः। त्वमेव त्वां वेत्थ स्तिमितवितरङ्ग वरद! भोः स्व-
संवेद्यस्वारसद्ययमबहुलानन्दमरितम्॥ ३७॥ आम्नायेश्वरगन्धमी-
शसदृशंमन्यास्तवेन्द्रादयो मुह्यन्ति त्वमनाविलो निरवधेर्भूम्नः कणे-
हत्य यत्। चित्रीयेमहि नात्र रङ्गरसिक! त्वं त्वन्महिम्नः परः वैपु-
ल्यान्महितः स्वभाव इति या किंधाम सात्म्यं न ते॥ ३८॥
पाड्गुण्याद्वासुदेवः पर इति स भवन् मुक्तभोग्यो बलाढ्यात्
बोधात् सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात्। प्रद्युम्नस-
र्गधर्मौ नयसि च भगवन्शक्तितेजोऽनिरुद्धः बिभ्राणः पासि तत्त्वं
गमयसि च तथा व्यूह्य रङ्गाधिराज!॥ ३९॥ जाग्रत्स्वप्नाद्यन-
मतुरीयप्रायव्यायतक्रमवदुपास्यः। स्वःमिलित्तत्सदृशविरहैः चातुर्व्यूह्यं
वहसि च धा॥ ४०॥ अचिदविशेषितान् प्रलयसीमनि संसरतः
करणकलेवरैर्घटयितुं दयमानमनाः। वरद! निजेच्छयैव परवानकरोः
प्रकृतिं महदभिमानभूतकरणावलिकोरकिणीम्॥ ४१॥ निम्नोन्नतं
च करुणं च जगद्विचित्रं कर्म व्यपेक्ष्य सृजतस्तव रङ्गशेषिन्। वैषम्य-
निर्घृणतयोर्न खलु प्रसक्तिः तद्ब्रह्मसूत्रमचितःश्रुतयो गृणन्ति॥४२॥
स्वाधीने सहकारिकारणगणे कर्तृस्वरीरेऽथवा भोक्तुः स्वानुविधा-
पराधविधयो राजो यथा शासितुः। दातुर्योऽधिजने कटाक्षणमिव

वैष्णवभोग्यलिप्सया वा ॥ ५४ ॥ उन्मूल्याऽऽदरं मन्दराद्रिमहिना तं सम्बधानाऽमुना दोर्भिश्चश्चमालिकं च दधिनिर्मथं मथानाऽम्बुधिम्। श्रीरङ्गेश्वर। चन्द्रकौस्तुभसुधापूर्वं गृहाणेति ते कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वः श्रमः ॥ ५५ ॥ देवीहस्ताम्बुजेभ्यश्चरणकिसलये संवहद्भ्योऽपहृत्य प्रत्यस्तानन्तभोगं झटिति चलपुटे चक्षुषी विस्तृणानः। आक्षिप्योरश्च लक्ष्म्याः स्तनकलशकनत्कुङ्कुमस्तोमपङ्कादेनः श्रीरङ्गधामा गजपतिघुषिते व्याकुलः स्तात् पुरो नः ॥ ५६ ॥ अतन्त्रितचमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति चाकुलान्तःपुरम्। अवाहनपरिष्क्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥ ५७ ॥ यं पश्यन्निश्चधुर्यां धियमसकृदधो मन्थरां मन्यमानः हुंकारास्फालनांघ्रिप्रहतिभिरपि तं तार्क्ष्यमभ्यक्षिपस्त्वम्। किञ्चोदश्चन्नुदस्य त्वमथ गजपतेर्बृंहिते जृम्भमाणे देव। श्रीरङ्गबन्धो! प्रणमति हि जने कान्दिशीको दया ते ॥ ५८ ॥ श्रीरङ्गेशय! शरणं ममासि वात्याव्याकोलरकमलतटाकताण्डवेन। स्वभूपान्सरमयथायथं दधानः धिङ्मामित्यनुगजगर्जमाजगन्थ ॥ ५९ ॥ मीनतनुस्त्वं नावि निधाय स्थिरचरपरिकरमनुमनु भगवन्!। वेदमनामिरगोक्तिविनिर्देरकलितलयभयजनमनुमनहः ॥ ६० ॥ श्रीनयनाभोद्धामुरदीर्घप्रविपुलसुरुचिरशुचिशिशिरवपुः। पक्षनिगीर्णोद्गीर्णमहाब्धिस्थलजलविहरणरतगतिरचरः ॥ ६१ ॥ चकर्थ श्रीरङ्गिन्निखिलजगदाधारकमठो भवन् धर्मान् कूर्म पुनरमृतमन्थाचलधरः। जगन्थ श्रेयस्त्वं मरकतशिलापीठललितं चलाद्दुग्धच्छस्मीपदकिसलयन्यासमुलभम् ॥ ६२ ॥ हृदि सुररिपोर्दंष्ट्रोत्खाते क्षिपन् प्रलयार्णवं क्षितिकुचतटीमर्चन् दैत्यासृकुङ्कुमचर्चया। स्फुटधुतसटाम्यद्रक्षस्तोन्मुखबृंहितः शरणमसि मे रङ्गिस्त्वं मूलकोलतनुर्भवन् ॥ ६३ ॥ नृहरिदशयोः पश्यन्नोत्पत्तिकं घटनाद्भुतं नरमृत हरिं दर्पैकैकं समुदिजतां जनः। इति किल

सिताक्षीरन्यायेन सङ्गमिताङ्के स्फुटसटमहादंष्ट्रं रङ्गेन्द्रसिंहमुपास्महे ॥ ६४ ॥ द्विषाणद्वेषोद्यन्नयनवनवह्निप्रशमनभ्रमल्लक्ष्मीवक्त्रप्रहितमधुगण्डूषसुषमः । नखक्षुण्णारातिक्षतजपटलैराप्लुतसटाच्छटास्कन्धो रुन्ध्ये दुरितमिह पुंस्पञ्चवदनः ॥६५॥ नखाग्रग्रस्तेऽपि द्विषति निनभक्तद्रुहि रुषः प्रकर्षाद्विष्णुत्वद्विगुणपरिणाहोत्कटतनुः । विरुद्धे वैयश्रीघुघटितसमानाधिकरणे नृसिंहत्वे विग्रहरद ! विभरामासिथ जगत् ॥ ६६ ॥ दैत्यौदार्येन्द्रयाच्ञाविहतिमपनयन् वामनोऽर्थी त्वमासीः विक्रान्ते पादपद्मे त्रिजगदणुसमं पांसुलीकृत्य लिल्ये । नाभीपद्मश्च मानक्षममिव भुवनग्राममन्यं सिसृक्षुः तस्थौ रङ्गेन्द्र ! वृत्ते तव जयमुखरो डिण्डिमस्तत्र वेदः ॥ ६७ ॥ भवान् रामो भूत्वा परशुपरिकर्मा भृगुकुलादलावीद्भूपालान् पितृगणमताप्सीत्तदसृजा । भुवो भाराक्रान्तं लघु तलमुपाचीकल्पदिति द्विषामुग्रंपश्योऽप्यनघ ! मम मार्जीगणदघम् ॥६८॥ मनुजसमयं कृत्वा नाथावतेरिथ पन्नगा क्वचन विपिने सा चेदन्तर्धि नर्म विनिर्ममे । किमथ जलधिं बध्वा रक्षो विधीशवरोद्धतं बलिमुखकुलोच्छिष्टं कुर्वन् रिपुं निरपत्रपः ॥ ६९ ॥ यदूद्भूते विजयापदानगणना कालिङ्गदन्ताङ्कुरैः यद्भ्रलेपलवोऽपि कालियभुवे कोलाहलायाभवत् । दूरेणापि च यस्य गोपवनिताः कृष्णागसा व्यसरन् तं त्वां क्षेमकृपीवलं हलधरं रङ्गेश ! भक्तास्महे ॥ ७० ॥ आकण्ठवारिभरमन्थरमेघदेश्यं पीताम्बरं कमललोचनपश्यहेति । महास्तनंधयमयाचत देवकी त्वां श्रीरङ्गकान्त ! सुतकाम्यति काऽपरैवम् ॥ ७१ ॥ शैलोग्निश्च जलांबभूव मुनयो मूढांबभूवुर्जडाः प्राज्ञामासुरगास्सगोपममृतामासुर्महाशीविषाः । गोप्याश्चास्सहजांबभूवुरपरे त्वन्यांबभूवुः प्रभो ! त्वं तेष्वन्यतमांबभूविथ मत्रद्रेणुकगोन्माथने ॥ ७२ ॥ कल्किततनुर्धर्मा लययिष्यन् कलिकलुषान् विलुनासि पुरा त्वम् । रङ्गनिकेत ! लुनीहि लुनीहीत्यखिलमरुन्तुदमघ लुनीहि ॥७३॥ आस्तां ते गुणराशिवद्गुणपरीवाहात्मनां

जन्मनां संख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर ! । अर्च्यः स्सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः प्रीणीषे हृदयालुभिस्तव ततश्शीलाज्जडीभूयते ॥ ७४ ॥ श्रीमद्व्योम न सीम वाङ्मनसयोस्सर्वेऽवतारः क्वचित् काले विश्वजनीनमेतदिति धीःश्रीरङ्गधामन्यथ। अर्तस्यागतिकैः कृपाकलुषितैरालोकितैरार्द्रयन् विश्वत्राणविमर्शनस्खलितया निद्रासि जागर्यया ॥ ७५ ॥ सर्गाभ्यासनिशालया निजधिया जानन्ननन्तेशयं भारत्या सहधर्मचाररतया स्वाधीनसङ्कीर्तनः। कल्पानेव वहन् कमण्डलुगलद्गङ्गाऽऽप्लुतोऽपूजयद्ब्रह्मा त्वा मुखलोचनाञ्जलिपुटैः पद्मैरिवाऽऽवर्जितैः ॥ ७६ ॥ मनुकुलमहीपालव्यानम्रमौलिपरम्परामणिमकरिकारोचिर्नीराजिताङ्घ्रिसरोरुहः । स्वयमथ विभो ! स्वेन श्रीरङ्गधामनि मैथिलीरमणवपुषा स्वाराध्याराधनान्यसि लम्भितः ॥ ७७ ॥ मन्वन्ववाये द्रुहिणे च धन्ये विभीषणेनैव पुरस्कृतेन । गुणैर्दरिद्राणमिमं जनं त्वं मध्येसरित्नाथ ! सुधाकरोपि ॥ ७८ ॥ तेजः परं तत्सवितुर्वरेण्यं धाम्ना परेणाप्रणखारसुवर्णम् । त्वा पुण्डरीकेक्षणमामनन्ति श्रीरङ्गनाथं तमुपासिषीय ॥ ७९ ॥ आत्माऽस्य जन्तुः परितस्थुषश्च मित्रस्य चक्षुर्वरुणस्य चाग्नेः । लक्ष्म्या सहोत्पत्तिकगाढबन्धं पश्येम रङ्गे शरदश्शतं त्वाम् ॥ ८० ॥ यस्यासि परयुर्न तमन्तरेमि श्रीरङ्गतुङ्गायतने शयानम् । स्वभावदासेन च योऽहमस्मि स सन् यजे ज्ञानमयैर्मखैस्त्वाम् ॥८१॥ आयुः प्रजानाममृतं सुराणां रङ्गेश्वरं त्वा शरणं प्रपद्ये। मा ब्रह्मणेऽस्मै महसे तदर्थं प्रत्यञ्चमेन युनजै परस्मै ॥८२॥ आर्ति तितीर्षुरथ रङ्गपते! धनायन् आत्मम्भरिर्निजिदिषुर्निजदास्यकाम्यन् । ज्ञानीत्यमून् समभधास्त्वममत्पुदारान् मीवासु दव ! म ।दाश्रय गोपकारान् ॥ ८३ ॥ नित्यं काम्यं परमपि कतिचिन्नय्यध्यात्मस्वमतिभिरममाः । न्यस्तसङ्गा विदधति विहितं श्रीरङ्गेन्दो ! विदधति न च ते ॥ ८४ ॥ प्रत्यक्षं स्वं पश्यन्निच पराचस्सञ्चक्षाणास्तचरादीर्विविच्य । युञ्जा

नाश्रतम्भरतायां सबुद्धौ स्वं वा त्वां वा रङ्गनाथाऽऽनुवन्ति ॥८५॥ अथ मुदितकषायाः केचिदावानदासत्वरितशिथिलचित्ताः कीर्तिचिन्त्यानमसाः । विदधति ननु पारं भक्तिनिम्ना लभन्ते त्वयि किल सतमे त्वं तेषु रङ्गेन्द्र ! किं तत् ॥८६॥ उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी। उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ अतस्त्वां श्रीरङ्गेशयां शरणमव्याजमभजम् ॥८७॥ पटुर्नकवराटिकेव कलसा स्थलयोः काकणिकासुवर्णकोट्योः । भवमोक्षणयोस्त्वयैव जन्तुः क्रियते रङ्गनिधे ! त्वमेव पाहि ॥८८॥ ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहमिच्छाधिकारशकनानुशयानभिज्ञः । रङ्गेश्वर ! पूर्णवृजिनश्शरणं भवेति मौख्यांद्ब्रवीमि मनसा विषयाकुलेन ॥८९॥ त्वयि सति पुरुषार्थे मत्परे चाहमात्मक्षयकरकुदनार्थोऽच्छदघद्रङ्गचन्द्र ! । जनमखिलमहंयुर्वञ्चयामि त्वदात्मप्रतिमभवदनन्यशानिवद्दंशिकस्सन् ॥९०॥ अतिक्रामन्नाज्ञां तव विधिनिषेधेषु भवतेऽपि अभिद्रुह्यन्वाग्धीकृतिभिरपि सक्ताय सततम् । अजानन् जानन् वा भवदसहनीयागसि रतस्सहिष्णुत्वाद्रङ्गप्रवण ! तव माभूवमभरः ॥९१॥ प्रकुपितभुजगफणानामिव विषयाणामहं छायाम् । सति तव भुजसुरविटपिप्रच्छाये रङ्गजीवित ! भजामि ॥९२॥ त्वत्सर्वशक्तेरविकाऽस्मदादेः कीटस्य शक्तिश्चेत रङ्गबन्धो ! । यत्त्वत्कृपामप्यति कोशकारन्यायादसौ नश्यति जीवनाशम् ॥९३॥ श्रीरङ्गेश ! त्वद्गुणानामिवास्मद्दोषाणां कः पारदृश्वा यतोऽहम् । ओघे मोघोदन्यवत् त्वद्गुणानां तृष्णापूरं वर्षतां नाऽस्मि पात्रम् ॥९४॥ त्वं चेन्मनुष्यादिषु जायमानस्तत्कर्मपाकं कृपयोपभुङ्क्षे । श्रीरङ्गशायिन्! कुशलेतराभ्यां भूयोऽभिभूयेमहि कस्य हेतोः ॥९५॥ क्षमा सापराधेऽनुतापिन्युपेया कथं मापराधेऽपि

दृप्ते मयि स्यात् । तथाऽप्यत्र रङ्गाधिनाथाऽनुतापव्यपायं क्षमेताऽतिवेला क्षमा ते ॥९६॥ बलिभुजि शिशुपाले तादृगागस्करे वा गुणलवसहयासाच्चरक्षमा संकुचन्ती । मयि गुणपरमाणूदन्तचिन्तानभिज्ञे विहरतु वरदाऽसौ सर्वदा सार्वभौमी ॥९७॥ दया परव्यसनहरा मनव्यथा सुखायते मम तदहं दयातिगः । तथाप्यमौ सुखयति दुःखमित्यतः दयस्व मां गुणमयी रङ्गमन्दिरी ॥९८॥ गर्भजन्मजरामृतिक्लेशकर्मपङ्क्तिभिगः । इदेव देवपदत्तं त्वां श्रियोऽहमकामये ॥९९॥ अनुकृत्य पूर्वपुंसः रङ्गनिधे । विनयडम्भतोऽमुष्मात् । शुन इव मम चरमेङ्घ्रेः उपभोगस्त्वद्वितीर्णःयाः ॥१००॥ सकृत्प्रपन्नाय तवाहमस्मीति आयाचते चाभयमीक्षमाणम् । त्वामप्युपाख्याऽहमहम्मतीनि रङ्गेश । विलम्भविकरेकात् ॥१०१॥ तवभरोऽहमकारिषि धर्मिकदशरणमित्यपि वाचमुदैरिरम् । इति समाक्षिकपविदत्त्व मां कुरु भरं तव रङ्गधुरन्धरं ॥१०२॥ दयाऽन्येषां दुःखाऽसहनमनन्योऽसि सर्वज्ञ दयात्सस्त्वं नातः प्रणमदपराधानविदुषः । क्षमा ते शङ्केन्दो । भवति न तरा नाथो न तमां तवौदार्यं यस्मात्तव विभवसर्वस्वममथाः ॥१०३॥ गुणतुङ्गतया तव रङ्गपते! भृशनिम्नमिमं जनमुन्नमय । यदपेक्ष्यमपेक्षितुरस्य हि; तत्परिपूरणमीशितुरीश्वरता ॥१०४॥ त्वं मीनपानीयनयेन कर्म गीमक्तिनिराग्यजुषो निमर्षि । रङ्गेश मां पासि मितम्पचं यत्पानीयशालं मरुभूषु तस्मात् ॥१०५॥

श्रीरङ्गराजस्तवे उत्तरशतकं समाप्तम् ।

श्रीरङ्गराजस्तवश्च समाप्तः ।

---

## श्रीपराशरभट्टार्यैः रनुगृहीतः
## श्रीगुणरत्नकोशः ।

---

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

श्रियै समस्तचिदचिद्विधानव्यसनं हरेः ।
अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोऽञ्जलिः ॥१॥ उल्लास—
पल्लवितपालितसप्तलोकीनिर्वाहकोरकितनेमकटाक्षलीलाम् । श्रीरंग—
हर्म्यतलमङ्गलदीपरेखां श्रीरङ्गराजमहिषीं श्रियमाश्रयामः ॥२॥
अनुकलतनुकाण्डालिङ्गनारम्भशुम्भत्प्रतिदिशभुजशाखश्रीसखानोक-
हर्द्धिः । स्तननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मीक-
ल्पवल्ली कटाक्षान् ॥३॥ यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातार-
तम्ये मुरारेः,वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति ।
भोगोपोद्घातकेलीचुलुकितभगवद्वैश्वरूप्यानुभावा, सा नः श्रीरा-
स्तृणीताममृतलहरिधीलङ्घनीयैरपाङ्गैः ॥४॥ यद्यावच्च च वैभवं तदु-
चितस्तोत्राय दूरे स्पृहा, स्तोतुं के वयमित्यदश्च जगृहुः प्राञ्चो गिरि-
श्यादयः । अप्यारं तव देवि! वाङ्मनसयोर्भोपानमिद्धं पदं कावा-
चः प्रयतामहे कथयितुं स्वामिप्रशस्त्यै गिराम् ॥५॥ स्तोतारं तमु-
शन्ति देवि! कवयो यो विस्तृणीते गुणान्, स्तोतव्यस्य तथा च ते
स्तुतिधुरा मय्येव विश्राम्यति ।; यस्मादस्मदमर्षणीयफणितिस्वीका-
रतस्ते गुणाः, क्षान्त्यौदार्यदयादयो भगवति! स्वां प्रस्तुवीरन् प्र-
थाम् ॥६॥ सूक्तिं समग्रयतु नः स्वयमेव लक्ष्मीः श्रीरङ्गराजमहिषी
मधुरैः कटाक्षैः । वैदग्ध्यवर्णगुणगुम्फनगौरवैर्यां कण्डूलकर्णकुहराः
कवयो धयन्ति ॥७॥ अनाघ्रातावद्यं बहुगुणपरीणाहि मनसः दु-
हानं सौहार्दं परिचितमिवाऽथापि गहनम् । पदानां संभ्रान्तादनि

मिपनिपेव्यं श्रवणयोः स्वमेव श्रीर्मद्यं यद्गुमुखय वाणीविलसितम् ॥८॥ श्रियःश्रीः! श्रीरङ्गेश्वरी तव च हृद्यां भगवती श्रियं स्वत्तोऽप्युच्चैर्वयमिह फणामः शृणुतराम् । दर्शं ते भूयास्तां सुरतरलतारे श्रवणतः, पुनर्हर्षोत्कर्षात्स्फुटतु भुजयोः कञ्चुकशतम् ॥९॥ देवि ! श्रुतिं भगवतीं प्रथमे पुमांसः त्वत्सद्गुणौघमणिकोशगृहं गृणन्ति । तद्द्वारपाटनपटूनि च सेतिहाससमन्त्रकाणस्मृतिपुराणपुरस्सराणि ॥१०॥ आक्षुवेदानमाने कतिचन कतिचाऽराजकं विश्वमेतद्राजन्वत्कैचिदीशं गुणिनमपि गुणैस्तं दरिद्राणमन्ये । मिथ्यान्ये गुराजम्भमिति च जटास्ते तलात्यकार्पुः ये ते श्रीरङ्गहर्म्याङ्गणकनकलते! न क्षणं लक्ष्यमासन् ॥११॥ मनसि विलसताऽक्ष्णा भक्तिसिद्धाञ्जनेन श्रुतिशिरसि निगूढं त्वत्सितं ते वीक्षमाणाः । निधिमिव महितानं सुज्ञाः येऽपि धन्याः ननु भगवति! दैवी सम्पदं तेऽभिजाताः ॥१२॥ अस्येशाना जगत इति तेऽधीमहे यां मनूद्धिं श्री-! श्रीसूक्तं यद्गुमुखपतेतां च शाखानुशाखम् । ईष्टे कश्चिज्जगत इति यः पौरुषे सूक्त उक्तः तं च त्वत्कं पतिमधिजगावुत्तरश्चाऽनुवाकः ॥१३॥ उद्घाहुस्तनामुपनेपदसाग्राह नैका नियन्त्रीं श्रीमद्रामायणमपि परं प्राणिति त्वत्त्रिषे । सतीरोऽस्मज्जननि! यतो सेतिहासैः पुराणैः निम्युर्वेदानपि च ततमे त्वन्महिम्नि प्रमाणम् ॥१४॥ आब्रह्मामनैयामकादपि निभोरासर्जनिर्वाहकादैश्वर्यं यदिहोचरोत्तरगुणं श्रीरङ्गभर्तुःप्रिये! । तुङ्गं कुलमुज्ज्वलं गरिमवत्पुण्यं पुनः पावनं धन्यं यत्तददश्च वीक्षणभुवस्ते पञ्चषा विप्रुषः ॥१५॥ एको मुक्तातपत्रप्रचलमणिपणारकारिमौलिर्मनुष्यः, दृश्यद्ग्रावलस्थो न गणयति नवान्यत्क्षणं क्षोणिपालान् । यस्तस्मै तिष्ठतेऽन्यः कृपणमशरणो दर्शयन्दन्तपङ्क्ती,

र्न श्रीरङ्गराजप्रणयिनि! नयनोदञ्चितन्यञ्चिताभ्याम् ॥१६॥ रति-
र्तिपरस्वतीधृतिमभृद्धिरिद्धिश्रियः सुवासालियतोमुखं चिचलिरेस-
र भ्रूलता । ततोमुखमपेन्दिरे! बहुमुखीमहम्पूर्विकां विगाह्य च वरां
पद्माः परिवहन्ति कूलङ्कषाः ॥ १७ ॥ सहस्थिरपरित्रसन्नविरि
ञ्चनाञ्चिश्चनैः अनोकहबृहस्पतिप्रबलविकल्पप्रक्रियम् । इदं मद्
सदात्मना नखिलमेव निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि!
ततताण्डवम् ॥ १८ ॥ कान्ते शंसति योग्यतां चिदचितोरन्योन्यमालि-
ङ्गतोः, भूताहंकृतिबुद्धिपञ्चकरणीस्वान्तप्रवृत्तीन्द्रियैः । अण्डानि
परःसहस्रमकरोत्तान्भूर्भुवःस्वर्वत , श्रीरङ्गेश्वरदेवि! ते विहृतये
सङ्कल्पयानः प्रियः ॥ १९ ॥ शब्दादीन् विषयान् प्रदर्श्य विभवं
विस्मार्य दास्यात्मकम्, वैष्णव्या गुणमायया ऽऽत्मनिवहान् विप्लाव्य
पूर्वः पुमान् । पुंसा पण्यवधूविडम्बिवपुषा धूर्तानिवाऽऽपालयन्, श्री
रङ्गेश्वरि! कल्पते तव परीहासात्मने केलये ॥ २० ॥ यद्दूरे मनसो
यदेव तमसः पारे यदत्यद्भुतं यत्कालादपवेलिमं सुरपुरी यद्गच्छतो
दुर्गतेः । सायुज्यस्य यदेव सूतिरथवा यद्दुर्ग्रहं मद्गिरां तद्विष्णोः
परमं पदं तव कृते मातस्समाम्नासिषुः ॥२१॥ हेलायामखिलं चरा
चरमिदं भोगे विभूतिः परा पुष्पास्ते परिचारकर्मणि सदा पश्यन्ति
ये सूरयः । श्रीरङ्गेश्वरदेवि! केवलकृपानिर्वाह्यवर्गो वयम् , शेषित्वे
परमः पुमान्परिकरा ह्येते तव स्फारणे ॥२२॥ आज्ञानुग्रहभीमको
गलपुरीपाला फलं मञ्जुषां याऽयोध्येत्यपराजितेति विदिता नाकं परेण
स्थिता । भावैरद्भुतभोगभूमगहनैस्सान्द्रा सुधास्यन्दिभिः श्रीरङ्गे
श्वरगेहलक्ष्मि! युवयोस्तां राजधानीं विदुः ॥२३॥ तस्यां च रत्न-
रङ्कपावलिरवधिजनताविश्रमार्होवकाशं सङ्कीर्णं दासवृन्दाकलितपरि
करैःपुम्भिरानन्दनिघ्नैः । स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गच-

कामिमु चैः आनन्दैकार्णवं श्रीभगवति! युवयोराहुरास्थानरत्नम् ॥२४ तत्र स्पर्शगन्धस्फुरदुपरिफणारत्नरोचिर्वितान, शिखी योऽनन्तभोगं तदुपरि नयता निश्रमेकातपत्रम् । तैस्तैः कान्तेन शान्तोदितगुणनिभवैरर्हता त्वामसंख्यैः, अन्योन्याढ्यतनिष्ठापनरसगहनान् देवि! बध्नासि भोगान् ॥२५॥ भोग्या वामपि नान्तरीयकतया पुष्पाङ्गरागस्रग् निवृत्तप्रणया विनाहनविधा नीताः परीणाहताम् । देवि ! त्वामनु नीलया सह मही देव्यस्सहस्रं तथा याभिस्त्वं स्तनबाहुदृष्टिभिरिव स्वाभिःप्रियं श्लाघसे ॥२६॥ ते सान्ध्यास्सन्ति देवा जननि! गुणवपुर्वेषवृत्तस्वरूपैः भोगैर्वा निर्विशेषास्समवयस इव ये नित्य निर्दोषगन्धाः । द्वेधा श्रीरङ्गभर्तुस्तव च पदपरीचारवृत्त्यै सदाऽपि प्रेमप्रद्राणभावाविलहृदयहठात्कारकैङ्कर्यभोगाः ॥२७॥ स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने! त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये । त्वमासीमातः श्रीः कथितुरिदमित्थन्त्वनिभवस्तदन्तर्मायत्वां न पृथगभिधत्ते श्रुतिरपि ॥२८॥ तव स्पर्शादीशं स्पृशति कमले! मङ्गलपद तवेदं नोपाधेरुपनिपतित श्रीरसि यत । प्रसूनं पुष्यन्तीमपि परिमलर्द्धिं जिगदिषुः न चैवन्त्वादेवं त्वदत इति कश्चित्कलयते ॥२९॥ अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभूदमी यत्र द्विवाःस्स च हतमत्वादिस्तदधगत् । अतः श्रीराम्नायस्तदुभयमुखं त्वां प्रणिजगौ प्रशस्तिस्सा राज्ञो यदपि च पुरीकोशदधनम् ॥३०॥ स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवान् त्वदायत्तर्द्धित्वेऽप्यभवदपराधीनविभवः । स्वया दीप्त्या रत्नं भवदपि महार्घं न वियुतं नकुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥३१॥ प्रशकनवलज्योतिर्ज्ञानैश्वरीविजयप्रथा प्रणतवरणप्रेमक्षेमङ्करत्वपुरस्सराः । अपि परिमलः कान्तिर्लावण्यमर्चिरितीन्दिरे! तव भगवतश्चैते साधारणा

गुणराशयः ॥३२॥ अन्येऽपि यौवनमुखा युवयोस्समानाः श्रीरङ्ग-
मङ्गलविजृम्भणवैजयन्त्यः । वासिस्तव त्वयि च तस्य परस्परेण सं
स्पर्धी दर्पण इव प्रचुरं स्वदन्ते ॥३३॥ युवत्वादौ तुल्येऽप्यपरवश-
ताशत्रुशमनस्थिरत्वादीन्कृत्वा भगवति गुणान्पुंस्त्वसुलभ-
भान् । त्वयि स्त्रीत्वैकान्तान् प्रदिमपतिपारार्थ्यकरुणाक्षमादीन्वा
भोक्तुं भवति युवयोरात्मनि भिदा ॥३४॥ घनकनकद्युती युवदशा-
मपि मुग्धदशां युवतरुणतयोरुचितमाभरणादि परम् । भुवनसमान-
देशविनिवेशि विभज्य हरौ त्वयि च कुशेशयोदरविहारिणि निर्वि-
शतः ॥३५॥ अङ्गं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गुम्भितः, क्षीरा-
ब्धेः किमजीजनत्तदुपगता मन्ये महार्घास्ततः । इन्दुः कल्पलतासु
धामधुमुखा इत्यादिका वर्णना, श्रीरङ्गेश्वरि ! शान्तकान्तं कथं
दिव्यं वपुर्नार्हति ॥३६॥ प्रणमदनुविधित्सावामनानप्रभग्रे प्रणयिप-
रिचिचीपादुश्लिष्टं पार्श्वकेन । कनकनिकषचञ्चच्चम्पकस्रक्समानप्र-
वरमिदमुदारं वर्ष्म वाचामभूमि ॥३७॥ एकं न्यञ्च्य नतिक्षमं मम
परं चाकुञ्च्य पादाम्बुजं मध्येविष्टरपुण्डरीकमभयं विन्यस्य हस्ता-
म्बुजम् । त्वां पश्येम निषेदुषीं प्रतिकलं कारुण्यकूलङ्कषस्फारापाङ्ग-
तरङ्गमम्ब मधुरं मुग्धं मुखं बिभ्रतीम् ॥३८॥ सुरभितनिगमान्तं
वन्दिषीयेन्दिरायाः, तव कमलपलाशप्रक्रियं पादयुग्मम् । वहति
यदुपमर्दव्रजन्ती किमाम्म प्लुतिभिरिव नवत्वं कान्तगाहान्त-
राले ॥३९॥ दरदसीकारकलावलेपकलुषा राज्ञा दशो दुर्वचा नित्यं
त्वन्मधुपानमत्तमधुपश्रीनिर्भराभ्या यतिम् । इम्भ्यामेव हि पुण्डरीक-
नयन वेदो विदामास ते साक्षाल्लक्ष्मि तवाऽऽलोकाभिः काका
कृपा वर्ण्यते ॥४०॥ आनन्दात्मभिरीशमज्जनमदक्षीबालसैर गल-
प्रेमार्द्रैरपिकूलमूढकरुणासम्प्लावितास्वादशैः । पद्मे ! ते प्रतिदिन-

चक्रकलिकाब्जादिदिव्याभरणैः, ऐश्वर्याङ्कसमुद्देश्शरणं मां पालया-ऽऽलोकितैः ॥४१॥ पादाक्रान्तुदयेन पङ्कजरजश्चेटीभूयालोकितः अम्लानिरथाम्बा मानमविधौ लीलारविन्दग्रहः । डोला ते नन्दमालेया हरिभुजे हास्यशब्दास्पर्धं केन श्रीरतिकोमला तनुरियं वाचां विमर्दक्षमा ॥४२॥ आमर्यादमकण्टकं स्तनयं नाद्यापि नाऽऽलोकितभ्रभेदसितविभ्रमा वहति या नैसर्गिकत्वाऽऽगः । स्तने शैशवयौवनव्यतिकरो गात्रेषु ते सौरभं भोगस्रोतसि कान्तसेशिककरग्रहेण गाहक्षमः ॥४३॥ आमोदाङ्कुरजालि यौवनदशाव्याकोचमम्लानिमस्मौन्दर्यामृतसेकशीतलमिदं लावण्यसूत्रार्पितम् । श्रीरङ्गेश्वरि! कोमलाङ्गसुमनस्पन्दभणं देवि! ते कान्तोरःप्रतियत्नमर्हति रुचिं चित्रामकाण्डाकुलम् ॥४४॥ मर्मस्पृशो रमसिरा व्यतिविप्रयुक्तः कान्तोपभोगललितैर्ललिताङ्गयष्टिः । पुष्पावलीव रसिकभ्रमरोपभुक्ता त्वं देवि! नित्यमभिनन्दयसे मुकुन्दम् ॥४५॥ घनकरदनामुक्ताहारलताटिका मणिनरतुलाकोटिग्रैवैर्जनार्दनजीविका । प्रकृतिमधुर गात्रं जागर्ति मुग्धविभूषणैर्विलयवाकल्पैर्दुग्धं पुरंध्र कनकलता यथा ॥४६॥ सामान्यभोग्यमपि कौस्तुभवैजयन्ती पञ्चायुधादि रमणः स्वयमेव विभ्रत् । तद्राग्स्वेदमिव ते परिवर्तनागः श्रीरङ्गधाममणिमञ्जरि! गाहते त्वाम् ॥४७॥ यदि मनुजतिरश्चां लीलया तुल्यवृत्तेः अनुजनुरनुरूपा देवि! नाऽवातरिष्यः । अमरसमभविष्यन्नर्म नाथस्य मातः! दग्दलदरविन्दोदन्तकान्तायताक्षि४८ स्खलितकटकमालैर्दोर्भिरब्धि मुरारेः भगवति! दधिमाथं मथ्नतः श्रान्तिशान्त्यै । अमदमृततरङ्गानन्ततः प्रादुरासीः सितनयनसुधाभिस्सिञ्चती चन्द्रिकेव ॥४९॥ मातर्मैथिलि! राक्षसीस्त्वयि तदैवार्द्रापराधास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता ।

काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः सा नस्सान्द्र
महागमस्सुखयतु क्षान्तिस्तवाऽऽकस्मिकी ॥ ५० ॥ मातर्लक्ष्मि!
यथैव मैथिलजनस्तेनाऽध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगै-
र्भावैरिहाऽमुत्र च । जामाता दयितस्तवेति भवतीसम्बन्धदृष्ट्या
हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृष्येम च ॥ ५१ ॥
पितेव त्वत्प्रेयाञ्जननि! परिपूर्णागसि जने हितस्रोतोवृत्त्या भवति च
कदाचित् कलुषधीः । किमेतन्निर्दोषः क इह जगतीति त्वमुचितै-,
रुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥ ५२ ॥ नेतुर्नित्य
सहायिनी जननि! नस्त्रातुं त्वमत्राऽऽगता, लोके त्वन्महिमावबोध
बधिरे प्राप्ता विमर्दं बहु । क्लिष्टं ग्रावसु मालतीमृदु पदं विश्लिष्य
वासो वने, जातो धिक् करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कु-
शम् ॥ ५३ ॥ अधिशयितवानब्धिं नाथो ममन्थ बबन्ध तं, हर
धनुरसौ वल्लीभङ्गं बभञ्ज च मैथिलि । अपि दशमुखीं लूत्वा रक्षः
कबन्धमनर्तयत्, किमिव न पतिः कर्ता त्वद्बाहुचुम्बु मनोरथः
॥ ५४ ॥ दशशतपाणिपादवदनाक्षिमुखैरखिलैः, रुपि निज
वैभवरूप्यविभैरनुरूपगुणैः । अनतरणैरथ रसयन् कमिता कमले!
क्वचन हि विभ्रमभ्रमिमुखे विनिमज्जति ते ॥ ५५ ॥ जननभवन
प्रीत्या दुग्धार्णवं बहुमन्यसे, जननि! दयितप्रेम्णा पुष्णासि तत्
परमं पदम् । उदधिपरमव्योम्नोर्विस्मृत्यमादृशरक्षणक्षममिति
धिया भूयः श्रीरङ्गधामनि मोदसे ॥ ५६ ॥ औदार्यकारुणि
कताश्रितवत्सलत्वपूर्वेषु सर्वमतिशायितमत्र मातः! । श्रीरङ्ग-
धाम्नि यदुताऽन्यदुदाहरन्ति, सीतावतारमुखमेतदमुष्य योग्या
॥ ५७ ॥ ऐश्वर्यमक्षरगतिं परमं पदं वा, कस्मैचिदञ्जलिभरं
वहते वितीर्य । अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब!, त्वं लज्जसे
कथय कोऽयमुदारभावः ॥ ५८ ॥ ज्ञानक्रियाभजनसम्पद

किञ्चनोहं इच्छाधिकारशकनानुशयानभिज्ञः। आगांसि देवि! युवयोरपि दुस्सहानि, बध्नामि मूर्खचरितस्तव दुर्भरोऽस्मि ॥५९॥ इत्युक्तिकैतवशतेन विडम्बयामि, त्वामम्ब! सत्यवचमः पुरुषान् पुरीशान्। यद्वा न मे सुबबलं तव पादपद्मलाभे त्वमेव शरणं विधिना कृताऽसि ॥ ६० ॥ श्रीरंगे शरदश्शतं सह सुहृद्वर्गेण निष्कण्टकं, निर्दुःखं सुसुखं च दास्यरसिकां भुक्त्वा समृद्धिं पराम्। युष्मत्पादसरोरुहान्तररजः स्याम त्वमम्बा पिता, सर्वं धर्ममपि त्वमेव भवतः स्वीकुर्वस्वत्कृपाम् ॥ ६१ ॥

॥ श्रीगुणरत्नकोशः समाप्तः ॥

---

श्रीकूरनारायणमुनिभिरनुगृहीतं
श्रीसुदर्शनशतकम् ।

क्लेशविंशतिकरामयस्य चकार चक्रस्तुतिं निवृत्तये ।
समाश्रयेऽहं परपूर्णीं यः तं कूरनारायणनामकं मुनिम् ॥
ज्वालावर्णनं प्रथमम्—

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्यमार्गिमर्चिःधाम्ना धाम्नान्धकारस्त्वजगदगदङ्कारभूम्ना स्वधाम्ना। दोःस्तम्भस्तम्भगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्या ज्वाला जाज्वल्यमाना वितरतु भवतां दीप्सयाऽर्म स्मितानि ॥१॥ प्रत्युद्यातं मयूखैर्नभसि दिनकृतः प्राप्तसेवं प्रभाभिः, धूमैः सौमेरवीभिर्दिवि चरितमिवं दीप्तिभिर्देवधाम्नाम्। भूपर्वे भवने च स्फुरतु मे कठदिग्भ्रान्तमान्द्रस्फुलिङ्गं, चाक जःग्रन्प्रजार त्रिभुवनविजयप्रवृत्तं मङ्गलं ॥ २ ॥ पूर्णं पूर्वस्तुधानां सुमहति लमतस्सोमबिम्बालवाले, धाराधाम्बावलद्भक्षितिग-

गनदिवथकराजद्रुमस्य। ज्योतिश्छन्ना प्रवालः प्रकटितसुमनस्सम्पदुत्तसलक्ष्मीं, पुण्याशाशाखेषु प्रदिशतु भवतां सप्रकर्षं प्रहर्षम् ॥३॥ अरादारात् सहस्राद्विसरति विमलश्रेणदृक्षाध्वरक्षात्, नामेर्भास्वत्तनामेर्निजविभवपरिच्छिन्नभूमेश्च नेमेः। आम्नायैरेककण्ठैः स्तुतमहिममहो माधवीयस्य हेतेः, तद्वो दिक्ष्वेधमानं चतसृषु चतुरः पुष्यतात् पूरुषार्थान् ॥ ४ ॥ श्यामं धामप्रसूत्या कचन भगवतः कापि यत्र प्रकृत्या, शुभ्रं शेषस्य भासा कचन मणिरुचा कापि तस्यैव रक्तम्। नीलं श्रीनेत्रकान्त्या कचिदपि मिथुनस्याऽऽदिमस्यैव चित्रं, व्यातन्वानं वितानश्रियमुपचिनुतात्शर्म यश्चक्रभानम् ॥ ५ ॥ शंसन्त्युन्मेषमुच्छोषितपरमहसो भास्वतः कैटभारेः इन्धे सन्ध्येव नक्तञ्चरविलयकरी या जगद्वन्दनीया। चन्धूकच्छायमच्छुच्छविघटितघनच्छेदमेक़स्विनी सा, राथाङ्गी रश्मिभङ्गी प्रणुदतु भवतां प्रत्यहोत्थानमेनः ॥ ६ ॥ साम्यं धूम्या प्रवृद्धया प्रकटयति नभस्तारकाजालकानि, स्फौलिङ्गीं यान्ति कान्तिं दिशति यदुदये मेरुशृङ्गारशङ्काम्। अग्निर्मर्यार्चिरैक्यं भजति दिननिशावल्लभो दुर्लभाभो, ज्वालावर्तोऽपि स्तः प्रहरणपतिजं धाम वस्तद्विनोतु ॥ ७ ॥ दृष्टेऽप्यव्योम चक्रे विकचनवजपासन्निकाशे सकाशं, सर्भानुर्भानुरेष स्फुटमिति कलयन्नागतो वेगतोऽस्य। निष्टो यन्निवृत्तो विधुमिव सहसा स्वाद्रुमप्याप नेष्टे, घर्मांशुं ते घटन्तामहितविहतये भानवो भास्वरा वः ॥ ८ ॥ देवं हेमाद्रितुङ्गं पृथुभुजशिखरं बिभ्रतीं मध्यदेशे, नाभिद्वीपाभिरामामरविभिन्नवर्तीं शेषशीर्षासनस्थाम्। नेमिं पर्यायभूमिं दिनकरकिरणाद्दप्तसीमः परीत्य, प्रीत्यै चक्रवालाचल इव विलसन्नस्तु दिव्यास्त्ररश्मिः ॥९॥ एकं लोकस्य चक्षुर्द्विविधमनुदरकर्म नम्रत्रिनेत्रं, दात्रर्थानां चतुर्णां शमवदरिनाणं पञ्चतां षड्गुणाढ्यम्। सप्ताचिश्शोचिता ष्टापदनवकिरणश्रेणिरञ्जद्दशाशं पर्यस्याद्दशताङ्गावयवपरि-

भृढज्योतिरीतीस्सहमम् ॥ १० ॥ उच्चण्डे यच्छिखण्डे निविडयति नभःक्रोडमक्रोऽटति धाम्, अभ्यस्य प्रौढतापग्लपितवपुरपो ध्धिभ्रतीरभ्रपंक्तीः। धत्ते शुम्भत्सुधौतसो निधुरपमधुन क्षौद्र कोशस्य साम्यं, रक्षन्त्वस्त्रप्रमोस्ते रचितसुचरितव्युष्टयो घृष्टयो वः ॥ ११ ॥ पर्यायोदीर्घिकाम्भस्सनिधरतटे गैरिकाम्बु प्रपात, सिन्दूरं कुञ्जराणां दिशिदिशि गगने सान्ध्यमेघप्रबन्ध। पारावारे प्रवालो वनभुवि च तथा प्रेक्ष्यमाणः प्रमुग्धे, साधिष्ठ वः प्रमोदं जनयतु दनुजद्वेषिणस्स्वैरपरागिः ॥ १२ ॥ भानो भा नो त्वदीया स्फुरति कुमुदिनीमित्र ! ते कुत्र तेजः, तारा ! स्ताऽऽरादपी रोसनल! न भवतः स्वैरमस्मदाचिः। शंमन्तीरथं नभःस्था यदुदयसमये चक्रराजांशवस्ते, युष्माकं प्रौढतापप्रसरभवगद्यापक्रमाय क्रमन्ताम् ॥ १३ ॥ जग्ध्वा कर्णेषु दूर्वाङ्कुरमरिसुदृशामक्षिपु स्वर्गधूनां, पीत्वा चाऽम्भश्चरन्त्यः सतृपमनुगता वल्लवेनाऽऽदिमेन। गावो वश्चकभर्तुः परममृतरस प्राश्रितानां दुहानाः, क्षद्धिस्वालोन्मुप्तनिःशुरनतमसः मालुनन्धां वहन्ताम् ॥ १४ ॥ सेनां सेनां मघोनो महति रणमुखेऽलं भयोल्लम्भयन्तीः उन्सेजोष्णालुदोष्णा प्रथमदिविपदामान्तलीयांऽगलीढे। विश्व विश्वम्भराधे रथपदधिपते लीलया पालयन्ती, वृद्धिस्सा दीधितीनां वृजिनमनुजनुमां जयत्वाजितं वः॥१५॥ तन्त्रा स्वेनोष्मणेन प्रतिभटवपुषामस्वधारा धयन्ती, प्रासेन क्षीवमावं प्रतिदिशममकृत् तन्वती घूर्णितानि। विंशाखिस्स्फोटशब्दं प्रकटयति पटून् याऽऽवहन्त्यट्टहासान्, भामा वः सन्दनाङ्गप्रभुम मुदयिनी स्पन्दता चिन्तताय ॥ १६ ॥ ढैनेगसेव्यमानो दनुजभटभुजादण्डदर्पोष्मर्तंसः, आशारोधोतिलङ्घी लुठदुडुघटलीलक्ष्य डिण्डीरपिण्डः। रिङ्गज्जालातरङ्गस्थितिरिपुनरघ्यातपातोग्रमार्गः, चाक्रोनश्शोचिरोधस्समयतु दुरितापद्धरं दावनाह्निम् ॥ १७ ॥

भ्राम्यन्ती संश्रितानां भ्रमशमनकरीच्छन्नसूर्यप्रकाशा, सर्वलोकानुरूपा रिपुहृदयतमस्कारिणी निस्तमस्का । धारासंपातिनी च प्रकटितदहना दीप्तिरस्त्रेशितुर्वः, चित्रा भद्राय विद्रावितविमतजना जायतामायताय ॥ १८ ॥ निन्ये वन्येव काशी दवशिखिजटिलज्योतिषा येन दाहं, कृत्यावृत्तया विलिल्ये शलभमुल भया यत्र चित्रप्रभावे। रुद्रोऽप्यद्रेर्दुहित्रा सह गहनगुहां यद्भयादभ्ययासीत्, दिश्याद्दिश्यार्चितो वस्स शुभमनिभृतं श्रीरिहेतिप्रतापः ॥ १९ ॥ उद्यन् बिम्बादुदाराम्यनजलाहिमं मार्जयन् निर्जरीणां, अज्ञानध्वान्तमूर्छाकरजनिरजनीमञ्जनव्याञ्जिताध्वा,। न्यक्कुर्वाणो ग्रहाणां स्फुरणमपहरन्नर्चिषः पावकीयाः, चक्रेशार्कप्रकाशो दिशतु दश दिशो व्यश्नुवानं यशो वः ॥ २० ॥ वर्गस्य स्वर्गधाम्नामपि दनुजनुषां विग्रहं निग्रहीतुं, दातुं सद्योबलानां श्रियमतिशयिनीं पत्रभङ्गानुवृत्त्या । योऽङ्के देदीप्यते या युगपदपि पुरो भूतिमध्या प्रकृत्या, सा वो नुधादविद्यां द्युतिरमृतरसस्यन्दिनीस्यान्दनाङ्गी २१ दाहं दाहं सपत्नान् समरभुवि लसद्भसना वर्मना यान्, क्रव्यादप्रेतभूतायभिलषितपुषा प्रीतकापालिकेन । कङ्कालैः कालधौतं गिरिमिवकुरुते यःस्वकीर्तेर्विहर्तुं, घृष्टिस्सान्द्रदिष्टं वस्सकलमुपनयत्वायुधाग्रेसरस्य २२ दग्धानां दानवानां सभसितनिचयैरस्थिभिस्सर्वशुभ्रां, पृथ्वीं कृत्वापिभूयो नवरुधिरझरी कौतुकङ्काणपेभ्यः। कुर्वाणं बाष्पपूरैः कुचतटघुसृणक्षालनं तद्वधूनां, पापं पापच्यमानं शमयतु भवतां शस्त्रराजस्य तेज ॥ २३ ॥ मायान्मोघं ललाटानल इति मदनद्वेषिणा ध्यायतेव, स्रष्ट्रा प्रोच्चिद्व्यासाम्बुजदलपटलप्लोषपुन्पश्यतेव । वज्राग्निर्मास नाशं व्रजदिति चकितेनेव शक्रेण वन्द्यैः स्तोत्रैरस्त्रेरस्य रस्य द्यतु दुरितं शतं द्योतमाना द्युतिर्वः॥२४॥इतिज्वालवर्णनंप्रथमम्

अथ नेमिवर्णनं द्वितीयम्—

सव्यासं गानमानां शलभकुलमिव ज्वालया लेलिहाना, घोषैः स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान् समुद्रान् । व्योढोरः प्रौढचारुत्रुटितरदुदग्रक्रीकनक्षुण्णदैत्यः, नेमिस्पर्शादर्शनी वः श्रियमतिशयिनीं दाशुतादाशकान्तरम् २५ धारा चक्रस्य तत्तागगरूणविततिद्योतितप्रचारा पारावारान्तरक्तमथनपिशुनितोच्चालपातालयात्रा । गोत्राद्रिस्फोटशब्दप्रकटितवसुधामण्डली चण्डयाना, पन्थानं वः प्रदिश्यात् प्रशमनकुशला पाप्मनामात्मनीनम् ॥ २६ ॥ यात्रा या शातलोका प्रकटितनिष्पन्नसमुद्रे समुद्रि, सत्त्वामरत्वा सहोष्मा कृतमगन्दगस्पन्दवाना ददाना । हानिं हा निन्दितानां जगति परिपिषं दानवीनां नवीनां, चक्रे चक्रेशनेमिश्शमुपहरतु सा सप्रभावप्रभावः ॥ २६ ॥ यत्रागमितान् दिधक्षौ प्रविशति यलिनो धाम निस्सीमधाम्नि, प्रस्थापस्तापशीर्णैः प्रगुणितसिकतो मौक्तिकैश्शौक्तिकेयैः । राशिर्नीरामपारां प्रकटयति पुनर्नीरिदाराश्रुपूरैः, षष्ठिं निर्याति निर्यापयतु नदुरितान्यक्षराजप्रधिर्वः ॥ २८ ॥ कृष्णातालेन कद्रूतनयफणमणीन् कल्पदीपस्य पुञ्जन् पातालान्त प्रपाती निखिलमपि तमः स्वेन धाम्ना निगीर्य । दैतेयप्रेयसीनां वसति हृदि हतप्रेयसां भूयसां यः, चक्राग्रीयाग्रदेशो दहतु विलसितं बह्रमानंहमां वः २९ कृष्णाम्भोदस्य भूषां कृतनयननयच्या हृतिर्भार्गवस्य, प्राप्तामावेदयन्ती प्रतिभटसुदृशामुद्धरां बाष्पवृष्टिम् । निष्प्रापत्पदश्रोम्भमममरचमूगर्जितैरुज्जिहाना, कीर्तिं वः केतकीभिः प्रथयतु सदृशीं पञ्चला चक्रधारा ॥ ३० ॥ वप्राया भेदनीयः परिणतिमखिलश्लाघनीयां दधानः, क्षुण्णां नक्षत्रमालां दिशि दिशि विकिरन् विश्रुता तुल्यकक्ष्यः । निर्याणेनोत्कटेन प्रकटयति नवं दानवारिप्रकर्षं, चक्राधीशस्य मद्रो वशयतु भवतां सर्वधाश्विस्तृतिम् ॥ ३१ ॥ नाकौकस्त्रासजुष्टदनविघटितस्कन्धनीरन्ध्रनिर्यत्, नन्यक्रव्यासमञ्चन्नमनमलमज्जनालजिह्वालताहिम् ।

र्थं दृष्ट्वा सांयुगीनं पुनरपि विदधत्याशिषो वीर्यवद्भ्यः, गीर्वाणा नि-
र्वृणाना वितरतु स वयं त्रिष्णुहेतिर्ग्रधिर्वः ॥ ३२ ॥ धन्वाध्वन्य
स्य धारासलिलमिव घनं दुर्गतस्येव वृष्टिः ज्वालान्धस्येव पक्षोः पद्-
विहृतिरिव प्रीणनी प्रेमभाजाम्। पत्युर्माया क्रियायां प्रकटपरिण
तिर्विश्वरक्षाश्रमायां, मायामायामिनी वस्त्रटयतु महती नेमिरक्षे-
श्वरस्य ॥ ३३ ॥ त्राणं या विष्टपानां वितरति च यया कल्प्यते
कामपूर्तिः, न स्थातुं यत्पुरस्तात् प्रभवति कलयाऽप्योषधीनाम-
धीशः। उन्मेषो याति यस्या न समयनियतिं सा श्रियं वः प्रदेयात्
न्यक्कृत्य द्योतमाना त्रिपुरहरदृशं नेमिरक्षेश्वरस्य ॥ ३४ ॥ नक्षत्र
क्षोदभूतिप्रकरविकिरणश्वेतिताशावकाशा, जीर्णैः पर्णैरिव द्यां
जलधरपटलैश्चूर्णितैरूर्णुनाना। अजानाजानगाजानतरिपुजनतारण्य
मावर्तमाना, नेमिर्नात्येव चक्री प्रणुदतु भवतां संहतं पापतूलम् ३५
क्षिप्त्वा वैपथ्यशाटीमिव जलदघटां जिष्णुकोदण्डचित्रां,
तारापुञ्जं प्रसूनाञ्जलिमिव विपुले व्योमरंगे विकीर्य। निर्वेदग्लानि-
चिह्नप्रभृति परमशानन्दाता दानवेन्द्रान्, नृत्यन नाट्यमिवं नट
इव तनुतां धर्मचक्रप्रधिर्वः ॥ ३६ ॥ दौर्गत्यप्रौढतापप्रतिभट
विभवा वित्तधारासृजन्ती, गर्जन्ती भीतिकम्पाभिर्ज्वलदनलशिखो
द्दाम सौदामनीका। अव्यात् अव्याददृष्टीनयनजलभरैर्दिक्षु
नव्याननाव्यान्, पुष्यन्ती सिन्धुदूरान् रथचरणरतेर्नेमिकादम्बि-
नी वः ॥३७॥ गन्धोद्वृत्तानवानामजममजमिवाऽऽक्रम्य जाज्वल्य
माने, यद्धाद्धाय जुहुविदशपरिषद् रास्रमाणप्रदायी। स्तोत्रै
र्ब्रह्मादिगीर्भिर्मुखरपरिसरं शब्दब्रह्मयोनिं, प्रासरद्ग्राम
सत्रं प्रधिरसुरारिपोः प्रार्थितं प्रस्तुतां वः ॥३८॥ इति नेमिवर्णनम्।

अथ अस्त्रवर्णनं तृतीयम्—

उत्पातालातकल्पान्यसुरपरिषदामाहवप्रार्थिनीनां, अध्यानध्यान
बोधध्यपणचणतमः क्षेपदीपोपमानि। त्रैलोक्यागारभारोद्-

द्गनसहमणिस्तम्भसम्पत्सखानि, त्रायन्तामन्तिमायां विपदि सपदि चोऽराणि सौदर्शनानि ॥ ३९ ॥ ज्वालाजालप्रवालस्तवकितशिरसो नाभिमालवालयन्त्य', सिक्ता रक्ताम्बुपूरैश्चकलितवपुषां शात्रवाणीकिर्नीनाम् ॥ चक्राक्रीडप्ररूढा भुजगभयभुजोपघ्ननिघ्नप्रचाराः, पुष्पन्त्यः कीर्तिपुष्पाण्यरकनकलताः प्रीतये वःप्रथन्ताम् ॥ ४० ॥ ज्वालाजालाभिगुप्तं क्षितिजलयमिवाऽऽपिभ्रती नेमिचक्रं, नागेन्द्रस्येव नाभेः फणपरिषदिव प्रौढरत्नप्रकाशा । दत्तां वो दिव्यहेतेर्मतिमरवितति: स्यातसाहस्रसङ्ख्या, सङ्ख्यावत्सङ्घचित्तश्रवणहरगुणस्त्रिदसन्दर्भगर्भाम् ॥ ४१ ॥ अक्लेशोपक्रमाणां बहुविधविमतध्वंदसंमोदितानाम्, सेवायै देवतानां दनुजकुलरिपो पिण्डिकाग्रङ्गभाजाम् । तत्तद्धामान्तमीमांविभजनविषये मानदण्डायमाना, भूमानं भूयसा वो दिशतु दृशशती भास्वराणामराणाम् ॥ ४२ ॥ ज्वालाकल्लोलमालानिविडपरिसरां नेमिवेलां दधाने पूर्णेणाक्रान्तमध्ये भुवनमयहविर्भोजिना पूरुषेण । प्रस्फूर्जत्प्राज्यरत्ने रथपदजलधावेधमानैः स्फुलिङ्गैः भद्रं वो विद्रुमाणां श्रियमरवितनिर्विस्तृणाना विधत्तान् ॥ ४३ ॥ नासीरस्वैरभग्नप्रतिभटरुधिरासारधाराभिषेकात् एकान्तस्मेरपद्मप्रकरसहचरच्छायया प्राप्य नाम्या । मुक्तानीयाङ्कुराणि स्फुरदनलशिखादर्शितप्राक्प्रवालानि, अव्याघातेन भव्यं प्रददतु भवतां दिव्यहेतेरराणि ॥ ४४ ॥ दावोल्कामण्डलीव द्रुमगणगहने वाडवस्येव वह्नेः, ज्वालावृद्धिर्महाब्धौ प्रचयति तमसि प्रातरर्कप्रभेव । चक्रे या दानवानां हयकरटिघटासङ्कटे जाघटीति प्राज्यं सा वः प्रदेयात् पदमरपरिषत् पद्मनाभायुधस्य ॥४५॥

तापाद्दैत्यप्रतापातपमुपचितात् त्रायमाणं त्रिलोकीम्, लोलज्वाला कलापैः प्रकटयदभितो नद्धाभ्रकाने छत्राकारं शलाका इव कनककृता दैत्यारिदोर्दण्डलग्नं, भूयासुर्भूपयन्त्यो रथचरणमरुत्स्फूर्तयः कीर्तये वः ॥ ४६ ॥ नाभीशालानिखातां नहनसमुचितां वैरिलक्ष्मीवशानां, संयद्वारीहतानां समनुविदधती काञ्चनालानपङ्क्तिम्। राजया च प्राज्यदैत्यव्रजविजयमहोत्तम्भितानां भुजानां, तुल्या चक्रारमाला तुलयतु भवतां तूलवच्छत्रुलोकम् ॥ ४७ ॥ आ नेमेश्चक्रवालाच्चिय इव विततः पिण्डिकाचण्डदीप्तेः, दीप्ता दीपा इवाऽऽराङ्कुरनखततमीगाहिनः पूरुषस्य। शाणे रेखायितानां रथचरणभये शत्रुशौण्डीर्यहेम्नां, रेखाः प्रत्यग्रलग्ना इव भुवनभरश्रेणयः प्रीणयन्तु ॥ ४८ ॥ दीप्तैरर्चिःप्ररोहैर्दलवति विधृते बाहुनालेन विष्णोः, उद्यत्प्रद्योतनाभं प्रथयति पुरुषं कर्णिकावर्णिकायाम्। चूडालं वेदमौलिं कलयति कमले चक्रनाम्नोपलक्ष्ये, लक्ष्मीं स्फारामराणि प्रतिविदधतु वः केसरश्रीकराणि ॥ ४९ ॥ धातुस्यन्दैरमन्दैः कलुषितवपुषो निर्झराम्भःप्रपातान्, अचिन्त्यमत्या स्वमूर्त्या रथचरणगिरेर्नेमिनामीतटस्य। व्याकुर्वाणाऽरपङ्क्तिर्वितरतु विभुताविस्तृतिं वित्तकोटीं, कोटीरच्छत्रपीठीकटककरिघटाचामरसङ्गिणीं वः ॥ ५० ॥ इति अरवर्णनं तृतीयम्।

अथ नाभिवर्णनं चतुर्थम्—

ऐक्येन द्वादशानामशिशिरमहसां दर्शयन्ती प्रवृत्तिं, दत्तः स्वर्लोकलक्ष्म्यास्तिलक इव मुखे पद्मरागद्रवेण। दैत्याहतेयदर्पक्षतिकरणरणप्रीणिताम्भोजनाभिः नाभिर्नाभित्वमुच्चैस्सुरपतिविभवस्पर्शि संदर्शिनी नः ॥५१॥ शस्त्रश्यामे शताङ्गक्षितिभृति तरलरुक्-रङ्गे तुरङ्गैः, स्वतन्मानङ्गनङ्के कुपितभटभुजच्छेदलुब्धप्रवाले। अस्तोकं प्रस्तुवानां प्रतिभटजलधौ पाटवं पाडवस्य, श्रेयो वस्यन्ति-

धत्तां श्रितदुरितहरा श्रीभगवस्य नाभिः ॥ ५२ ॥ ज्वालाचूडाल कालानलचलनसमाडंबरा सांपरायं, यासावासाद्य मायत्सुरसुभट भुजास्फोटकोलाहलाढ्यम् । दैत्यारण्यं दहन्ती विरचयति यशो-भूतिशुभ्रां धरित्रीं, सा वश्चक्रस्य नक्रसदमृदितगजत्रायिणी नाभिरव्यात् ॥ ५३ ॥ विन्दन्ती सान्ध्यमर्चिर्विदलितवपुषः प्रत्यनीकस्य रक्तैः, स्फायन्नक्षत्रराशिर्दिशिदिशि कणश कीकसै कीर्यमाणैः । नाकौकःपक्ष्मलाक्षीनवमदहसितच्छायया चन्द्रपादान्, राधाङ्गी विस्तृणाना रचयतु कुशलं पिण्डिका यामिनी वः ॥ ५४ ॥ निस्सीमं निस्सृताया भुजधरणिधराघाटतः कैटभारेः, आशाकूलङ्कषैरहितबलमहाम्भोधिमासादयन्त्याः । चक्रज्वालापगायाश्चल-दरलहरीमालिकादन्तुराया, बिभ्रत्यावर्तभावं भ्रमयतु भुवने पिण्डिका वः प्रशस्तिम् ॥ ५५ ॥ पाणौ कृत्वाहवाग्रे प्रतिभटनि-जयोपार्जितां वीरलक्ष्मीं, अनीतायास्ततोऽस्याः स्वसविधमसुरद्वेषिणा पूरुषेण । प्रासादं वासहेतोर्विरचितमरुणं रश्मिभिस्सूचयन्ती, नाभिर्नो निर्मिमीतां रथचरणपतेर्नि[illegible] निर्विघातम् ॥ ५६ ॥ डिण्डीरापाण्डुगण्डैररियुवतिमुखैः पिण्डिका कृष्णहेतेः, उच्चण्डाश्रु प्रपंचैरुपरततिलकैरुक्तशौण्डीर्यचर्या । द्वित्रग्रामाधिपत्यद्रुहिण-मदमपीदूपिताक्षक्ष्माभृत् , सेवाहेवाकपाकं शमयतु भवतां कर्म शर्मप्रतीपम् ॥ ५७ ॥ पर्याप्त्युन्नतिं या प्रथयति कमलं या तिरोभाव्य भाति, स्रष्टुस्सृष्टेर्देवीव कुवलयमहितं या बिभर्ति स्वरूपम् । भूम्ना स्वेनान्तरिक्षं कलयति च या सा विचित्रा विधत्तां, दैत्याराततिनाभिर्द्रविणपतिपदद्रोहिणीं संपदं वः ॥ ५८ ॥ वाणीवाङ्गैश्चतुर्भिस्सदसि सुमनसां घोतमानस्वरूपा, यान्त्स्या मुरारेभिमतमखिलं श्रीरिव स्पर्शयन्ती । दुर्गेवोग्राकृतिर्या त्रिभुवन-

जननस्थेमसंहारधुर्या, मर्यादालम्घन वः क्षपयतु महती हेतिवर्य-स्य नाभिः ॥ ५९ ॥ सम्भिरसन्तानजामिर्मधुरमधुरमसन्दसन्दोहि नीभिः, पाटीरैः प्रौढचन्द्रातपसुपमालोपनैर्लेपनैश्च । धूपैः कालागरूणामपि सुरसुदृशो विसमर्चासु यस्याः, गन्धं रुन्धन्ति सा वधिरमसुरभिदो नाभिरव्यादभव्यात् ॥ ६० ॥ अंहसंहत्य दग्ध्वा प्रतिजनिजनितं प्रौढसहारवन्या दूराब्धन्यानधन्यान्महति विनति-र्भिर्धामनि स्थापयन्ती । विश्रान्ति शाश्वतीं या नयति रमयतां चक्रराजस्य नाभिः संयन्मोमुह्यमानात्रिदशरिपुदृशासाक्षिणी साक्षिणी वः ॥ ६१ ॥ इति नाभिवर्णनं चतुर्थम् ।

अथ अक्षवर्णनं पञ्चमम्—

श्रुत्वा यन्नामशब्दं श्रुतिपथकटुकं देवनक्रीडनेषु, सर्वैरस्वैर-धत्यो भयविवशधियः कातरन्यस्तशाराः । मन्दाथं यान्त्यमन्दं प्रति युवतिमुखैर्दर्शितोत्प्रासदर्पैः, अक्षं सौदर्शनं तत्क्षपयतु भवतामेध-मानां धनायाम् ॥ ६२ ॥ व्यस्तस्कन्धं विशीर्णप्रसवपरिकरं प्रत्तपत्रोपमर्दम्, संयद्वर्षासु वर्षातुरखगपरिपत्पीतरक्तोदकासु । अक्षं रक्षस्तरुणामशनिवदशनैरापतन्मूर्ध्निमूर्ध्नि, स्तादक्षाधीधि-तुर्वः स्तवकितयशसे द्वेषिणां प्लोषणाय ॥ ६३ ॥ दीक्षां मह्या-मसत्रे महति कृतवतो दीक्षितैस्सहताभिः, जिह्वाले सप्तजिह्वे दनुज कुलहविर्जुह्वतो नेमिजुह्वा । वैकुण्ठाख्यस्य कुण्डं महदिव निलसत्पिण्ड कावेदिमध्ये, दिश्याद्दिव्यर्द्धिदेश्यं पदमिह भवतामक्षतोन्मेषमक्षम् ॥ ६४ ॥ तुङ्गद्दोरद्रिशृङ्गाद्भुजविजयिनः स्पष्टदानोद्यमानां, शत्रु-स्तम्बेरमाणां शिरसि निपततः सत्त्वमुक्तास्थिपुञ्जे । रक्तैरभ्यक्तमूर्ते-र्विदलनगलितैर्व्यक्तशोणायितर्द्धेः हर्यक्षस्यारिभङ्ग जनयतु जगता-मीडितं क्रीडितं वः ॥६५ ॥ उन्मीलत्पद्मरागं कटकमिव धृतं बाहुना यन्मुरारेः दीप्तान् रश्मीन्दधानं नयनमिव यदुत्तारकं विष्टपस्य । चक्रे शार्कस्य यद्वा परिधिरभिर्दद्धत्यहत्यामिवद्रा,

अक्षं पक्षे पतिन्वा परिघटयतु चस्तदङ्कदिष्टां प्रतिष्ठाम् ॥ ६६ ॥ [illegible]
भूतप्रभृतक्षत [illegible]
सन्मितैरशुभिम्मंशयघ्नीं, अक्षं चक्रस्य दत्तामेघशतशमनं दाशुर्षी शेमुर्षीं वः॥ ६७ ॥ पद्मोल्लासप्रद-यज्जनयति जगतीमेधमाने प्रबोधां यस्सच्छायाममाना लसति परिसरे रोहिणी तारकाग्र्या । नानाहेत्युत्तरं प्रकटयति च यत्प्रासकृष्णप्रचाणं त्रेधा भिन्नस्य धाम्नस्समुदय इव तत्पातु वश्चाङ्कमक्षम् ॥ ६८ ॥ शोचिर्भिः पद्मरागद्रवसमसुमैश्शोभमानावकाशम्, प्रत्यग्राशोकरागप्रतिभटवपुषा भूषितं पूरुषेण । अन्तः स्वच्छन्दमग्नोत्थितभृगुतनयं क्षत्रियाणां क्षतानां, आरब्धं शोणितौघैस्सर इव भवतो दिव्यहेत्यक्षमव्यात् ॥ ६९ ॥ मत्तानामिन्द्रियाणां कृतविषयमहाकाननक्रीडनानाम्, सृष्टं चक्रेश्वरेण ग्रहणधिषणया नारिषद्वारणानाम् । गम्भीरं यन्त्रगतं कमपि कृतधियो मन्वते यन्महेयात्, अस्थूलां मेदिर वस्त्रिजगद्भिमतस्थूललक्ष तदक्षम् ॥ ७० ॥ प्राणादीन् सवियम्य प्रणिदित मनसां योगिनामन्तरङ्गे, तुङ्गं सङ्कोच्य रूपं विरचितदहराकाश कृच्छासिवेत्न । प्राप्तं यत्पूरुषेण स्वमहिमसदृशे धाम कामप्रदं वः भूयात् तद्भूर्भुवस्स्वस्त्रयनरिवसितं पुष्कराक्षायुधाक्षम् ॥ ७१ ॥ विद्वान्वीभेण धाम्ना चरणनखभुवा यद्वासस गर्भे, चक्राध्यक्षस्य निद्रत्परिहसितजपापुष्पकोशान्प्रकाशान् । शुभ्रैरभ्रैरदभ्रैश्शरदिनत इतो व्योम विभ्राजमानं प्रातस्त्यादित्यरोचिस्ततमिव भवतः पातु गाधाङ्कमक्षम् ॥ ७२ ॥ श्रीवाणीवाङ्मृडान्यो विदधति भजनं शक्तयो यस्य दिक्षु प्राह व्यूहं यदाद्यं प्रथममपि गुणं भारती पाञ्चरात्री । घोरां शान्तां च मूर्तिं प्रथयति पुरुषः प्राक्तनैः प्रार्थनाभिः, भक्तानां यस्य मध्ये दिशतु तदनघामक्षमध्यक्षतां वः ॥ ७३ ॥ रक्षःपक्षेण रक्षरक्षतममरगणं लक्ष्यवैलक्ष्यमार्जा, लक्ष्मी-

मर्शीयमाणां चलमथनभुजे वज्रशिक्षानपेक्षे। निक्षिप्य क्षिप्रमध्यक्षयति जगति यद्दक्षतां विष्णुहेतेः, अक्षामामक्षमां तत्क्षपयतु भवतामक्ष जिह्वक्ष्यमक्षम् ॥ ७४ ॥ इतिअक्षवर्णनं पञ्चमम्।

अथ पुरुषवर्णनं षष्ठम्।

ज्योतिश्चूडालमौलिस्त्रिनयनवदनः षोडशोद्दण्डबाहुः, प्रत्यालीढेन तिष्ठन्प्रणतजनमनःपाशहोमानलेन्धसः। निश्शेषेण स्वधाम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणः, भूयात् सौदर्शनो वः प्रतिभट पुरुषः पूरुषः पौरुषाय ॥७५॥ वाणी पौराणिकी यं प्रथयति महितं प्रेक्षणं कैटभारे, शक्तिर्यस्येषुदृष्ट्वानलपरशुमुखव्यापिनी तद्वि-भूत्याम्। कर्तुं यत्तत्त्वबोधो न निशितमतिभिर्नारदाद्यैश्च शक्यः, दैर्घ्यं वो मानुषीं च क्षिपतु स विपदं दुस्तरामस्त्रराजः ॥ ७६ ॥ रूढस्ताराललाले रुचिरदलचयः श्यामलश्मश्रुजालैः, ज्वालाभिस्स-प्रवालः प्रकटितकुसुमो बद्धमन्द्यैः स्फुलिङ्गैः। आशानां पादमूले प्रकृतिमधुरया छायया तापहृद्रः, दत्तामुद्भो प्रकाण्डः फलमभि लषितं विष्णुमद्भुत्यब्रुध ॥ ७७ ॥ धाम्नामाम्रेडमादानां निचय-मिव चिरस्थायिनां डाक्शानां, मार्तण्डानां समूहं सह इव बहुलां रत्नभासामिवर्द्धिम्। अर्चिस्सङ्घातमेकीकृतमिव शिखिनां वाड-वाग्रेसराणां, शङ्कन्ते यस्य रूपं स भवतु भवतां तेजसे चक्रराजः ॥ ७८ ॥ उग्रम्पश्याक्षमुद्यद्भ्रुकुटि मणिमुकुट कुण्डलिस्पष्टदंष्ट्रं, चण्डा-ङ्गारोहदूर्ध्वकेशमटनलसमर्षामलक्ष्योरुकाण्डम्। प्रत्यालीढस्थपादं प्रथयतु भरतां पालनव्यग्रमग्रे, चक्रेशोऽकालकालेरितमदविस्फुटा-टोपलोपाय रूपम् ॥७९॥ चक्रं कुन्तं कृपाणं परशुहुतवहावङ्कुशं दण्डशक्ती, शङ्खं कोदण्डपाशौ हलमुसलगदावज्रशूलांश्च हेतीन्।

दोर्भिस्तम्भापमर्द्दं धदतुलबलस्तम्भितागातिदर्पः, व्यूहस्तेजोभिमानी नरकविजयिनो जृम्भतां संपदे वः ॥ ८० ॥ पीतं केशे रिपोरप्यसृजि रथपदे सथि रेऽप्युत्कटाक्षं, चन्द्राधःकारि यन्त्रे वपुषि च दलने मण्डले च सराङ्कम् । हस्ते वक्त्रे च हेतिस्तवकितमसमं लोचने मोचने च स्तादस्तोकाय धाम्ने सुरवरपरिषत्सेवितं दैवतं व ॥ ८१ ॥ चित्राकारैः स्वचारैर्मितसकलजगज्जागरूकप्रतापः मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान् । पश्चाद्रक्षतिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानां, लक्ष्मीं राजागनन्स्पो वितरतु भवतां चक्रवर्ती ॥ ८२ ॥ अक्षाण्यक्षाभ्रमालान्यरविवरलुठचन्द्रखण्डद्युतीनि, ज्वालाजालावलीढस्फुटदुडुपटलीपाण्डुदिङ्मण्डलानि । चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालाशेषाण्यस्त्रग्रामाग्रिमस्य प्रददतु भवतां प्रार्थितं प्रथितानि ॥ ८३ ॥ शूलं त्वक्रात्मशीलं घृणिरणुकघृणिः पट्टिसः स्पष्टमादः शक्तिरशालीनशक्ति कुलिशमकुशलं कुण्ठधारः कुठारः । दण्डश्चण्डत्वशून्यो भवति तनु धनुर्यस्तुलाग्ने वः स्यात्, ग्रस्ताक्षेपास्त्रगर्वो रथचरणपतिः कर्मणे शर्मणाय ॥ ८४ ॥ क्षुण्णाजानेय वृन्दं क्षुभितरथगणं सत्रमाग्राप्ययूथं, स्वेलामेरं भेहलाकलकलविगलत्पूर्वगीर्वाणगर्वम् । पूर्वाणस्याम्पराय रथचरणपतिः स्वंयमाँ वः प्रशस्ति, दुग्धां दुग्धाब्धिमाभं भयविरमगुनामीरनासीरवर्ती ॥८५॥ द्रुपरोल्लालिमाल्लिप्रहरणरमणोचानितं वनेये, विद्राति द्रावयपुनः प्रधनभुवि परावर्तमानेन भग्रा । निर्जित्य प्रत्यनीकं निरवधिकवरद्रास्तिकाद्दीयरथ्यं, पथ्यं विधत्स्व दाधान् प्रथयतु भवतो हे तिरिहेन्द्रानुजस्य ॥ ८६ ॥ नन्दिन्यामन्दसूनवे गलति गणपतौ व्याकुले बाहुलेये, षण्डे चाकिरपकुण्ठे प्रमथपरिषदि त्रासवत्यां प्रमायम् । उन्निद्राऽऽर्जी बलिष्ठ भल्लिभुजबनं यो ददावादिभिक्षां, भिक्षां तत्प्राणरूपां स

भवदकुशलं कृष्णहेतिः क्षिणोतु ॥ ८७ ॥ रक्तौघाभ्यक्तमुक्ताफल लुलितलसद्वीचिवृद्धौ महाब्धौ, सन्ध्यासम्बद्धताराजलधरशबला-काशनीकाशकान्तौ। गम्भीरारंभमम्भश्चरमसुरकुलं वेदविघ्नं विनिघ्नन्, निर्विघ्नं वः प्रसूतां व्यपगतविपदं सम्पदं चक्रराजः ॥८८॥ काशीविप्लोपचैद्यक्षपणधरणिजध्वंससूर्यापिधान, ग्राहद्वेधात्वमालित्रुटनमुखकथावस्तुसत्कीर्तिगाथाः। गीयन्ते किन्नरीभिः कनकगिरि गुहागेहिनीभिर्यदीयाः, देयाद्दैतेयवैरी स सकलभुवनश्लाघनीयां श्रियं वः॥ ८९ ॥ नानावर्णान् विभूष्यन्विरचितभुवनानुग्रहान् विग्रहान्यः, चक्रेष्वष्टासु मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु। आतारा-दर्णमालावधिषु वसति यः पूरुषो वस्सवश्यात्, व्यध्वैरुद्धूतसत्त्वैरुप हितमघहिध्वान्तमध्वान्तवर्ती ॥ ९० ॥ द्वात्रिंशत्षोडशाष्टप्रभृति पृथुभुजस्फूर्तिभिर्मूर्तिभेदैः, कालाद्ये चक्रपद्मे प्रकटितविभवः पञ्च कृत्यानुरूपम्। अर्थानामर्थितानामहरहरखिलं निर्विलम्बैर्विलम्बैः, कुर्वाणो भक्तवर्गं कुशलिनमवताद्वायुधग्रामणीर्वः ॥ ९१ ॥ कोणै र्णैस्सरोजैरपि कपिशगुणैष्पड्भिरुद्भिन्नशोभे, श्रीवाणीपूर्विकाभिर्दध ति विक्रमतश्शक्तिभि केशवादीन्। तारान्ते भूपुरादौ रथचरण गदाशार्ङ्गखड्गाङ्किताशे, यन्त्रे तन्त्रोदिते वः स्फुरतु कृतपदं लक्ष्म लक्ष्मीसखस्य ॥ ९२ ॥ दंष्ट्राकांत्या कडारे कपटकिटितनोः कैट-भारेरधस्तात्, ऊर्ध्वं हासेन विद्धे नरहरिवपुषो मण्डले वासवीये। प्राक्प्रत्यक्मान्ध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानः, दैतेयो त्पातशंसी रविरिव रहयत्वस्तरागो रुजं वः ॥ ९३ ॥ कोणे क्वापि स्थितोऽप त्रिभुवनविततश्चन्द्रधामाऽपि रूक्ष- रुक्मच्छायोपि कृष्णा-कृतिरनलमयोऽप्याश्रितत्राणकारी। धामभारोऽपि दीप्तो दिनकररुचि रैंऽप्युल्लसत्तारकश्रीः, चक्रेशश्चित्रभूमा वितरतु विमतत्रासनं शासनं वः ॥ ९४ ॥ शुक्रश्शक्र! स्तवस्ते सहदहन! कलां काल! तेऽयं न कालः, किं वो रक्षांसि! रक्षा तव फलतु पतोयावृक्षां पादसेवा

वायो! हृतोऽसि भर्तुस्त्यज घनदं मद सेव्यतां त्र्यंबकेति, प्राहुर्धन्त्रपालास्म दनुजनिजयी हन्तु तन्द्रालुतां च ॥९५॥ गायत्रवर्णारचक्रे प्रथममनुमन्त्रस्मेरपत्रारविन्दे बिम्बं त्र्यक्षिकोणं वहति जयिजयाद्यष्टशक्तो निषण्णा । श्रोरू नोऽश्रोकमूले पदमविचल सद्रीमसीमाक्षयीमा.पुमो दिव्यरत्नावाभा पुरपहरिमयी भक्तिरभ्यस्तरश्मि ॥९६॥ पाश्चात्याशोकपुष्पप्रकरनिपतितैः प्राप्तरागं परागैः,मन्यारोचिष्मगन्धैः स्वपदशशधरं प्रेक्ष्य तारानुपक्रम् । पञ्चानाम्बद्धकोशानि सुरनिर्मरखर्जूरान् कल्पमानान्, चक्राधीशोऽभिनन्दन् प्रविशतु मदशीमुत्तमश्लोकतां वः॥९७॥ रक्ताशोकस्य पेटस्य न निहितपदं प्राक्शाखस्य मूले, चक्रैस्त्रैस्तदाधैरपि मन्त्रितचतुद्विश्चतुर्वाहुदण्डम् । आसीनं भासमान स्थितमपि भयासनायतां तत्समेकं पश्चात् पूर्वत्र भागे स्फुटतरहरितामानुपं जानुपाद्वः ॥ ९८ ॥ प्राणे दत्तप्रयाणे मुषितदिशि दृशि त्यक्तसारे शरीरे, मत्यां व्यामोहवत्यां मरम मे मनसि क्वाद्रे क्वाद्रे चा चक्रात्ननैति मृत्युप्रतिभयमुभयाकारचित्र परितः तेजस्ताचिप्तता यश्रिदशकुलधनं श्रीक्षणं तीक्ष्णदंष्ट्रम् ॥ ९९ ॥ यस्मिन् विन्यस्य भारं विजयति जगतां जङ्गमस्थावराणां, लक्ष्मीनारायणाख्यं मिथुनमनुभवत्यत्युदारान् विहारान् । आरोग्य भूतिमायुः कृतमिह बहुना यद्यदाम्नायदं नः, तत्तत्सद्यःसमस्तं दिशतु स पुरुषो दिव्यहेत्यक्षवर्ती ॥ १०० ॥ दर्शानीतचरविधायुमणिगिरिशर्वाध्ययज्ञमहृद्यावराणां, अर्धिष्यज्ञपुनेम्यादिषु च परमतः पुंसि षड्विंशतेश्च । मद्भसौदर्शन यः पठति कृतमिदं कूरनारायणेन, स्तोत्रं निर्विष्टभोगो भजति स परमां चक्रसायुज्यलक्ष्मीम् ॥ १०१ ॥　　इति पुरुषवर्णनं षष्ठम् ।

सुदर्शनशतकं समाप्तम् ।

